# दशकुमारचरितटीका।



श्रीशिवरामकृत भूषणाख्या एवं श्रीमत् कवीन्द्राचार्य्य
सरस्वतीकृत पूर्व्वपीठिका टीका पद-
दीपिकाख्या सहिता।

---

**श्रीभुवनचन्द्र वसाकेन प्रकाशिता।**

( ८ नं निमतलाघाट ष्ट्रीट हइते प्रकाशित। )

**कलिकाता राजधान्याम्।**

श्रीउदयचरण पालेन नूतन वाल्मीकि यन्त्रे मुद्रितम्।

( २६ नं शिवनारायण दासेर लेन बाहिरसिमला। )

ई० १८८५

# अथ दशकुमारचरितटीका भूषणाख्या ।

अपर्णया हैमवत्या युक्तः स्थाणुः प्रसीदतु ।
सर्वतापप्रशमनः सर्वाभीष्टफलप्रदः ॥ १ ॥
वृषभानुजया युक्तो देवो हलधरानुजः ।
भूतये भवतो भूयाद्योग्ययोगसुखान्वितः ॥ २ ॥

महेशपादाम्बुजसक्तचेता
नरेशसंपूजितपादपद्मः ।
ग्रहेशतेजा विरजा महौजास्त्रि-
लोकचन्द्रोऽजनि स द्विजाग्रः ॥ ३ ॥

सिद्धिर्वचोवृद्धिरलं सुतादीन-
शिश्रियद्यस्य गृहं समृद्धिः ।
शुद्धिर्मनो बुद्धिरुदारकर्म्म
धर्मप्रसक्तस्य च धर्म्मराशेः ॥ ४ ॥

जातः सुतस्तस्य स कृष्णरामो
मनोजवस्तस्य सुता अभूवन् ।
तेष्वग्रजः पूज्यपदारविन्दप्रसा-
दवित्तः शिवरामनामा ॥ ५ ॥

गोविन्दरामोऽथ मुकुन्दरामो
जातः क्रमात् केशवरामसंज्ञः ।
करोमि टीकां निजबन्धुवर्गमुदे
मनोज्ञां शिवरामसंज्ञः ॥ ६ ॥

श्रुत्वेति। भुवनस्य जगतो वृत्तान्तं दक्षिणाग्न्यादिभिः कथ्यस्येन्द्रस्य गुरोः पितामहस्य शकुन्तलादुष्यन्तादीनां च गान्धर्वविवाहकरणविषयां प्रवृत्तिम्। वार्त्ता प्रवृत्तिर्वृत्तान्तः इत्यमरः। अनेन गान्धर्वविवाहेन परिणीतां तानो पुण्यवत्त्वज्ञानाद्राजवाहनेन सह गान्धर्वविवाहो मम पुण्यवत्त्वं सम्पादयेदिति मतिरुत्पन्ना। तेन च तस्मिन् राजवाहनेऽतिरागः। अतएव त्रिभुवनसर्गयात्रासंहारसंस्थिताभिः प्रत्यानीयमानरागपूराम् इति वक्ष्यति। उत्तमाङ्गनावन्तिसुन्दरी नायिका मालवेन्द्रतनया। त्वत्प्रसादादेतद्वृत्तान्तकथनरूपात्। चरितार्था। श्रोतव्यश्रवणादिति भावः। तमोपहोऽभिमतवरलाभेऽपि कन्यानामात्मदाने न प्रभुत्वमित्येवं रूपाज्ज्ञानापहः। ज्ञानप्रदीपः। गान्धर्वादिभिः परिणीतानां पुण्यश्लोकता। पुण्यकृतां न जातु पातकं पीडयतीत्येवं रूपं जज्ञानं तदेव प्रदीप इत्यर्थः। एषस्ते रदनच्छद ओष्ठचुम्बयितुमशक्यमन्येनान्यया वा प्रेरणं कृत्वा मया चुम्बयितुम्। अम्बुजासना लक्ष्मीः। एतेन विशेषणद्वयेन विष्णुरूपवर्णनाद्भावि सार्वभौमत्वं सूचितम्। वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि। यस्याति (स्ते) हृदये संवित्तं नृसिंहमहं भजे इति श्लोकेन तादृशविशेषणाक्रान्तं नृसिंहरूपिणं भज इत्यर्थं केन तादृशविशेषणाक्रान्तस्य नृसिंहत्वसूचनादन्यस्त्रीभोगराहित्यं सूचितम्। कन्दली कदली। कुसुमचन्द्रकः कुसुमगुच्छः?। समौ चन्द्रकमेचकौ इत्यमरः। शारो नानावर्णः। शबले मारुते शारः इति वैज-

चरणौ। अधीरमवशम्। धैर्यं तु वशधार्ष्ट्ययोः इत्यजयः। उत्सारी रम्यः। शीफरः स्फीतरम्ययोः इत्यजयः। जरठ-जालपादो वृद्धहंसः। जालपादः श्वेतगरुच्चक्राङ्गो मानस-प्रियः इति वैजयन्ती। कमलमूढः कमलेन भ्रान्तः। कमलसदृश इति यावत्। उपलभ्याद्भूय। उपलभ्यस्त्व-नुभवः इत्यमरः। मुक्तकण्ठं मुक्तस्वरम्। उच्चैरित्यर्थः। कण्ठो गले सन्निधाने ध्वनौ,मदनपादपे इति विश्वप्रकाशः। येन येन प्रकारेण। तदात्वायतिविभागं तत्कालोत्तर-कालयोः कृत्यम्। तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः। कृत्यांशयोर्विभागः स्यात् इत्यजयः। समयो व्यवस्था। समयाः शपथाचारकालसिद्धान्तसंविदः इत्य-मरः। प्रविध्यमानं ताड्यमानम्। तुमुले सङ्कुले। रण-सङ्कुले शक्तोऽपि रणान्यसङ्कुले भाक्तः। तुमुलं रणसङ्कुले इत्यमरः। अयन्त्रितोऽनिवारितः। अन्तर्वंशिकपुरुषाः। अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः इत्यमरः। राजपुत्रं राजवाहनम्। अनुभावः प्रभावः। अनुभावः प्रभावे च निश्चये भावसूचके इति वैजयन्ती। निग्रहो बन्धनम्। चण्डवर्मणे दर्पसारामात्याय। कोपात्। हेतौ पञ्चमी। निशाम्यालोक्य। शम आलोचने। प्रत्यभिज्ञा विस्मृतज्ञानम्। मदनुजः सिंहवर्मा। अङ्गेश्वरादन्य एवायम्। एवमत्र कथा—अवन्तिसुन्दर्याः सखी बाल-चन्द्रिका। तां काप्युत्सवसमाजे ददर्श सिंहवर्मा। भ्रातु-रधिकारात्कामातिदर्पात्सिंहवर्मा तां नेतुमैच्छत्। ततो रात्रौ तत्सङ्केतस्थानस्थं तं जघान पुष्पोद्भवः। आवर्जितं

स्वायत्तीकृतम्। वशीकृतमिति यावत्। पापशील: पदभि
स्वभाव:। शीलं स्वभावे सद्वृत्ते इत्यमर:। ब्राह्मणं
ब्राह्मणाधम:। ब्रुवो हीन: पदात्परे। जातिमात्रोपजीवी
तु कथ्यते ब्राह्मणब्रुव: इति वैजयन्ती। मादृशेषु पुरुष-
सिंहेषु सावमाना इत्यनेन तस्यां स्वाभिलाषध्वनि:।
मातुलकन्यापरिणयनानुरोधेनाभिलाष:। वेदविरुद्धत्वा-
त्स्वार्यैस्त्यक्तम्। एतदनार्य्याचरणमाशु पश्चताहेतु:। शूल-
स्यावतंसवदाचरितम्। शूलारूढ़मित्यर्थ: कुलपांसनी
कुलदूषिका। पांसन: कुलदूषक: इति वैजयन्ती। भ्रुकु-
टिर्भ्रुव: कुटि: कौटिल्यम्। अतिभूमिरधिष्ठानम्। सहि-
ष्णुता सहनशीलता हंसकथाया: स्मर। अधीगर्थदयेशां
कर्मणि इति कर्मणि षष्ठी। पूर्वजन्मनि सरसि क्रीडता-
नेन कोऽपि राजहंसो द्विमुहूर्त्तं मृणालेन बद्धस्तेनासौ शप्त:—
द्विमासं तवापि पादबन्धनं भविष्यति। तत: सम्राट्
त्वमेष्यति इति कथा। वासु बाले। बाला स्याद्वासु: इत्यमर:।
यत्त्वस्य नाट्य एव प्रयोग उचितो नाट्यवर्गपाठात्तन्न।
तत्रान्ययोगव्यवच्छेदकत्वात्। नाट्य एतेषामेव प्रयोगो
नान्येषामिति। अतएव काव्येऽपि नाट्यवर्गस्थान्देव्यादि-
शब्दान् प्रायुङ्क्त कालिदास:—ब्राह्मे मुहूर्त्ते किल तस्य
देवी कुमारकल्पं सुषुवे कुमारम् इति।

अथेति। पृ ५ प १६ विदितवार्त्तौ ज्ञातवृत्तान्तौ।
वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्त: स्यात् इत्यमर:। आर्त्तौ
दु:खितौ। मालवेन्द्रो मानसार:। आकारपक्षपातिनौ
सौन्दर्य्यात्तत्पक्षस्थितौ। जिघांसमानं हन्तुमिष्यमाणम्।

चण्डशील उग्रस्वभावः। चण्डः क्रूरातिकोपयोः इति। उदन्तो वृत्तान्तः। राजराजगिरिः कैलासः। सन्दिश्य सन्देशं कृत्वा। सन्देशः प्रहितं वच इति वैजयन्ती। किशोरो बालः। चूड़ामणिर्नमुचिकन्यया दत्तः। द्वितीयोच्छ्वासारम्भे स्पष्टं भविष्यति। उद्धरणायोन्मूलनाय। निनाय सहैवेति शेषः। सहैव निनायेति सम्बन्धः। दूतव्रातो दूतसमूहः। व्रातवारसङ्घातसञ्चयाः इत्यमरः। अदत्तापेक्षोऽकृतापेक्षः। साक्षात्। साक्षात्प्रत्यक्षतुल्ययोः इत्यमरः। अवलेपो गर्वः। प्रतिबलं शत्रुबलम्। सम्परायः संग्रामः। चण्डवर्मणेति। जगृहे इति पूर्वेणान्वितम्। न व्ययूयुजन्न पृथक् चकार। युजेर्णिजन्ताच्चङि लुङ्। अपि तूत्तरकल्प्योक्तौ। अकल्पसन्धोऽचिन्त्यप्रतिज्ञः। सत्यसन्ध इति यावत्। अजीगणद्गणनं कारयति स्म। गणेर्णिचि लुङ्। एकपिङ्गः कुबेरः। यक्षैकपिङ्गैलविल—इत्यमरः। जङ्घाकरिकः। जङ्घाकरिकजाङ्घिकौ इत्यमरः। हलकारा इति प्रसिद्धम् प्रभवतः प्रभो राज्ञः। प्रत्यये लक्षणे हेतौ क्रियायास्तु शतुर्वचः। अयि। अधिक्षेपैकगुह्ययोः इति केशवः। कीर्त्तिसारेणेति। निरपराधिनोऽनुजस्य बन्धनेच्छास्य विनाशहेतुः। तत्फलं वनवासः। राज्यच्युतिरेवेति भावः। चारके। चारकं बन्धनालयः इति। उचितकल्पनोपपन्नो योग्यालङ्कारयुक्तः। कल्पना सज्जना समे इत्यमरः। क्रीड़नं क्रीड़ासाधनम्। क्वचित् क्रीड़नकम् इति पाठः शत्रुसाहाय्यायेति। शत्रुसाहाय्यं सिंहवर्म्मसाहाय्य कर्त्तुमित्यर्थः। क्रियार्थोपपदे चतुर्थी। प्रत्य

न्नसागतस्य। राजन्यकस्य राजसमूहस्य। राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् इत्यमरः। गोत्रोक्षोष्ट्रोरभ्र— इति वुञ्समूहे। सकोशवाहनस्य द्रव्यवस्त्रादिगजाश्वादियुक्तस्य। अवग्रहणं प्रतिबन्धम्। प्रतिबन्धोऽवग्रहः स्याद्वार्षिकाशुभयोरपि इति। अवेक्षाचक्रे सावधानां चक्रे। अवेक्षा प्रतिजागरः इत्यमरः। उषोरागे प्रभातरागे। रागोऽनुरागे लाक्षादौ मात्सर्यालोकयोरपि इति वैजयन्ती। रक्षिभी रक्षाधिकारिपुरुषैः। व्यजिज्ञपन्निवेदितवती। नलिनलुब्धेति। मन्मुखे नलिनलम्भ्रान्तया कलहंसेनावरुद्धवक्त्राया ममेत्यर्थः। मन्दोदकेऽल्पाश्मदि। मूढाल्पापटुनिर्भाग्या मन्दाः इत्यमरः। मणिकिरणेत्यादि क्रियाविशेषणम्। पलितं जरसा शौक्ल्यम् इत्यमरः। सन्दानतां बन्धनताम्। अपरिक्षीणशक्तित्वं स्वस्वविषयग्राहकत्वम्। रजतशृङ्खलीभूतां मां समभ्यगमत्प्राप्तवानित्यन्वयः। असौ वीरशेखरनामकः। तदपकारे नरवाहनदत्तापकारे। समसृज्यत सङ्गतः। प्रतिश्रुतं प्रतिज्ञातमित्यर्थः। खखसारमवन्तिसुन्दरीं तुभ्यं दास्य इत्येव प्रतिज्ञातमिति भावः। तेन दर्पसारेण। व्यवदायमानचन्द्रिके निर्मलीभवज्ज्योत्स्ने। दैप् शोधने। उपासरत्। वीरशेखरनामको गतवानित्यर्थः। तिरस्करिण्यान्तर्धानकारिण्या। अपाश्रयः शिरोभागः। अपाश्रयः शिरोभागः इति वैजयन्ती। त्रिभुवनसर्गेत्यादि। त्रिभुवनस्य तद्वासिजनस्य सर्गेण मोहेन यात्रा गतिः। इन्द्रादेः पराङ्गनागमनं, यादवानां मद्यपानं, युधिष्ठिरनलादीनां द्यूतवि-

धिस्तेन संहारः, इन्द्रचन्द्रबालिरावणादे रोगवधादिः। सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु। यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे इति विश्वप्रकाशः। यद्वा सर्ग उत्पत्तिः, यात्रा स्थितिः, संहारो लयः, तत्र संस्थिताभिस्तद्बोधिकाभिः। अत्र पूर्वमतं युक्तमिति श्रुत्वा तु भुवनवृत्तान्तम् इत्यादि निरूपितम्। न्यरूपयद्दृष्टवान्। विलोकनं निरीक्षणं निभालनं निरूपणम् इत्यजयः। प्रतिबद्धो निवारितः। निग्रहस्यान्तर्गतोऽध्यवसाय उत्साहो यस्य। उत्साहोऽध्यवसायः स्यात् इत्यमरः। पाण्डुवर्णलोहो(हं) रजतम्। सर्वं स्यात्तैजसं लोहम् इत्यमरः।

तस्मिन्निति। पृ ८ प ८ नखरः | बाँक इति भाषया | नखरस्त्वसिपुत्रिका इति वैजयन्ती। उदस्तः क्षिप्तः। आधोरणो हस्तिपकः | आधोरणा हस्तिपकाः इत्यमरः। स्तम्बेरमो हस्ती। इभः स्तम्बेरमः पद्मी इत्यमरः। रयोः वेगो जवो रंहः इति वैजयन्ती। पत्तिः पदातिः। पदातिपत्तिपदग—इत्यमरः। अदभ्रं बहु। अदभ्रं बहुलं बहु इत्यमरः। विरुद्धानस्य विरोधं कुर्वतः। गात्रं शरीरम्। गात्रं वपुः संहननम् इत्यमरः। गजप्रकरणेऽमरोक्तस्य द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् इति पूर्वजङ्घावाचकगात्रस्य न ग्रहणम्। उत्तरग्रन्थविरोधात्। आक्रम्य पादविक्षेपं कृत्वा। क्रमु पादविक्षेपे। असक्तमिति क्रियाविशेषणम्। हस्तिनमस्पृष्ट्वेत्यर्थः। निर्वर्ण्य दृष्ट्वा। निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् इत्यमरः। अये। अचिन्तिते वर्त्तमानेऽव्ययम्।

अतर्कोपतिते त्वये इति वैजयन्ती। कणप:। लोहस्तम्भस्तु कणप:। लोहोवन्दा भाषया। कर्णप:। कुटिलाग्रस्तु कर्णप:। प्रास: कुन्त:। कुन्तप्रासौ मिथ: समौ। पट्टिश:। पट्टिश: स्याद्द्विशाल ग्र। तोमरो वेगदण्डवान् इति वैजयन्ती। उपयुञ्जान उपदधान:। विचिक्षेप प्रेरितवान्। अन्येनाङ्गराजसाहाय्यार्थमागतेन। समन्तत: सर्वत:। समन्ततस्तु परित: सर्वतो विष्वगित्यपि। बलनिकायेन सेनासमूहेन। निकायो निवहो व्यूह: समूहो विसरो व्रज: इति वैजयन्ती।

अनन्तरमिति। पृ १० प १४ अन्तरेऽवसरे। कश्चिद्दनमिताख्य:। कर्णिकारो द्रुमोत्पल:। अथ द्रुमोत्पल:। कर्णिकार परिव्याध: इत्यमर:। कठचम्पा इति भाषायाम। कुरुविन्द:। कुरुविन्दो मेघनामा इत्यमर:। दृषद्यरखे सस्ये च कर्रुविन्द: इत्यनेकार्थध्वनिमञ्जरी। कमलकोमलपाणिपाद इत्यादि। अस्वेतरक्तमृदुलौ कमलोदराभौ श्लिष्टाङ्गुलौ रुचिरताम्रतलौ सुपार्ष्णी। उष्णौ शिराविरहितौ च निगूढगुल्फौ कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य इति। विस्तरस्तु वराहसंहितायां द्रष्टव्य:। क्षतहस्ततया सुशिक्षितत्वेन। क्षतहस्त: सुप्रयोगविशिख: क्षतपुङ्खवत् इत्यमर:। प्रत्ययाज्ज्ञानात्। प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु इति। सन्निपातितमानीतम्। अखिलं चण्डवर्म्मसैन्यम्। अपवर्जितं युद्धसमये शत्रुणा गृहीतम्। कोशवाहनं धनं हस्त्यश्वादि चैकीकृत्य देवमुपतिष्ठत्वित्यन्वय:। कोशोऽस्त्री कुड्मले शास्त्रे अर्थौ नारेऽत्र मन्दिरे इति भागुरि:।

अस्मद्ग्रन्थेन। गृह्यः पचस्य उच्यते इति हलायुधः। इह गङ्गातीरे। उपतिष्ठतु समीपमागच्छतु। रोहिणी वटः। न्यग्रोधी रोहिणो वटः इति वैजयन्ती। उपहारवर्मेत्यादि। राजहंसस्य त्रयोऽमात्या धर्म्मपालसितवर्म्मपद्मोद्भवाः। धर्म्मपालस्य सुमन्त्रसुमित्रकामपालाः सुताः। सितवर्म्मणः सुमतिसत्यवर्माणौ सुतौ। पद्मोद्भवस्य सुश्रुतरत्नोद्भवौ सुतौ। तेषु पितॄणां मरणोत्तरं सुमन्त्रसुमित्रसुश्रुतसुमतयः पितॄणामधिकारे स्थिताः। कामपालः क्वाप्यगमत्। रत्नोद्भवः समुद्रतरणमकरोत्। सत्यवर्मा देवयात्रामकरोत्। सुमतिसुमन्त्रसुमित्रसुश्रुतानां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्याः पुत्राः। इत्येतेषां सम्बन्धः। हर्षाविद्धमिति क्रियाविशेषणम्। उत्पीड़िततरं गाढ़ं यथा स्यात्तथा। हर्षकम्पितपलितम्। क्रियाविशेषणम्। अनुयुक्तः पृष्टः। प्रश्नोऽनुयोगः पृच्छा च इत्यमरः। सोमदत्तपुष्पोद्भवयोरिति। एतेनात्र कुमारत्रयकथासंग्रहः। अतएवाष्टावेवोच्छ्वासाः।

इति श्रीदशकुमारटीकायां भूषणाभिधायां
प्रथम उच्छ्वासः।

---

राजवाहनः कदाचित्पितरमामन्त्र्य सुहृद्भिः सह विन्ध्येऽटव्विवालयमद्राक्षीत्। तत्रत्यादेव विवरान्निर्गत्य शिवार्चनं कुर्वन्तीं नमुचिकन्यां प्रेक्ष्य कामपीड़यातिक्रमं द्विजं तत्रापश्यत्। विश्राममिषात्ससुहृत्तत्र स्थितः।

क्वचित प्रयाते मित्रगणे द्विजेन स्ववृत्तान्तोऽस्मै निवेदितः। अथ रात्रौ ससुहृद्गणः सद्विजश्च तत्रैव सुष्वाप। अथार्द्धरात्रे निर्गतां तामीशमर्चयित्वा यान्तीं तद्वारि द्विजोपकाराय देवालयबिलं गतमात्मानं मित्रबोधाय विलिख्यानुययौ। तत्र स्वर्णपुरे कन्याशतवृतां तां पर्यङ्कस्थां का त्वम् इत्यान्वयुङ्क्त राजवाहनः। देव, विष्णुना नमुचौ सालोक्यं नीते मां समाश्वास्येदनभिहितम्—योऽत्र ज्वलनकुण्डे प्रवेक्ष्यति स ते भर्त्ता इत्यनुजगाद सा। ततो द्विजेन ज्वलनकुण्डे प्रविश्य सोढा। तद्दत्तं च राजवाहनः क्षुत्पिपासाहरं मणिमादाय बहिर्ययौ। मित्रगणस्तु प्रातस्तं तत्रानुपलभ्य तदन्वेषणाय दिक्षु प्रतस्थे। राजवाहनोऽपि मित्राण्यनुपलभ्य स्वेच्छया महीं विचचारेति प्रसङ्गः। असुरविवरं पातालम्। अधोलोकस्तु पातालं दैत्यरन्ध्रं रसातलम् इत्यजयः। संलपतोऽन्योन्यं भाषतः (भाषमाणान्)। संलापो भाषणं मिथः इत्यमरः। उपलभ्य ज्ञात्वा। बुभुत्सुर्बोद्धुमिच्छुः। न्यशामयमपश्यम्। शमो दर्शने इति मित्त्वनिषेधः। चूत आम्रः। आम्रश्चूतो रसालोऽसौ इत्यमरः। उद्विग्नो भ्रान्तमानसस्तस्य वर्णः कान्तिस्तद्वत्कान्तिर्यस्य सः। उपलिप्सुरुपलब्धुमिच्छुः। प्रसङ्गप्रोषितस्य कारणेन गतस्य। प्रसङ्गः कारणं हेतुः इति वैजयन्ती। अवतंसस्थानीया शेखरसदृशी। रत्नं पुंस्यवतंसो वा कर्णपूरेऽपि शेखरे। क्वचित् वतंसस्थानीया इति पाठः। तत्र वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः इत्यकारलोपः। वारयुवतिः। वारस्त्री गणिका वेश्या इत्यमरः। तारकितम्।

तदस्य संजातं तारकादिभ्यः—इतीतच्। सनिर्वेदं सर्वत उपेक्षासहितम्। द्वेषः सर्वत्र निर्वेदः इति। शिखण्डः केशपाशः। केशपाशः शिखण्डः स्यात् इति वैजयन्ती। मातृप्रमुखो माधवसेनादिः। सानुक्रोशं सकृपम्। सर्वजनस्य यथा कृपा स्यात्तथेत्यर्थः। कृपा दयानुकम्पा स्यादनुक्रोशोऽपि इत्यमरः। कृपालुः। स्याद्दयालुः कारुणिकः कृपालुः सूरतः समा इत्यमरः। सव्रीडेत्युक्तमत्वार्थम्। स्वभावोक्तिः। मुनेः सनिर्वेदप्रत्ययार्थं सविषादत्वम्। महर्षेरावर्जनस्य स्वसुकरत्वज्ञानात्सगौरवत्वम। अयं जनो मद्रूपो वेश्याजनः। श्वोवसीयाय। श्वःश्रेयसं स्यात्कल्याणं श्वोवसीयं शिवं शुभम् इति वैजयन्ती। श्वसोऽवसीयः श्रेयसः। अभ्युपपत्तिरनुभवः पादयोर्मूलं पादसमीपदेशम्। मूलशब्दः समीपदेशवाची। एतावताप्यार्त्तिकारणं स्पष्टम। अनुपन्यासादार्त्तिकारणं तज्जनन्याह—अस्या मे दोषम् इति। वित्तविज्ञातविश्रुताः इत्यमरः। अनुष्ठापनं विधापनम्। जन्मनः। कार्त्तिक्याः प्रभृति इति भाष्यप्रयोगात्पञ्चमी। अङ्गक्रिया। अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्द्दनम् इति वात्स्यायनः। दोषा वातपित्तश्लेष्माणः। मेधा बुद्धिः। धीर्धारणावती मेधा इत्यमरः। अग्निर्जाठरः। धातवो रसादयः। तेषां साम्यं करोति तादृत्तेन। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। सप्तैव दशवैकेषां रोमत्वक्स्नायुभिः सह इति हेमचन्द्रः। आ पञ्चमात्। पञ्चम्यपाङ्परिभिः इति पञ्चमी। पितुरप्यनतिदर्शनम्। दृष्टिदोषस्य बाल्ये भयस-

त्वात्। अनङ्गविद्यानां वात्स्यायनसूत्रादीनाम्। वचनकौशलं वक्रोक्तिश्लेषादि। शब्दो व्याकरणम्। हेतुस्तर्कः। समयः सिद्धान्तो ज्यौतिषः। समयाः शपथाचारकालसिद्धान्तसंविदः इत्यमरः। आजीवो जीवनोपायः। आजीवो जीविका वार्त्ता इत्यमरः। क्रीड़ाकौशले नर्मभाषणनैपुणे। क्रीड़ा लीला च नर्म च इत्यमरः। सजीवनिर्जीवासु। सजीवाः कुक्कुटादियोधनं निर्जीवाश्च तुरङ्गादिः। अभ्यन्तरकला रतसमये क्रियमाणं किमपि विज्ञानम्। साभ्यन्तरकला यत्तु स्पृश्याङ्गस्पर्शनं रतौ इति वात्स्यायनः। प्रसाधितायाः अलङ्कृतायाः। प्रसाधितोऽलङ्कृतश्च इत्यमरः। परिबर्हः परिकरः। परिच्छदे नृपार्हेऽर्थे परिबर्हः इत्यमरः। संगृहीतैर्विधेयीकृतैः। ग्राह्यवाग्भिरुपलालकैः। ग्राह्यवागुपलालकः इति वैजयन्ती। शिल्पवित्तकैः शिल्पप्रसिद्धैः। मार्दङ्गिकमौरजिकाद्यैरित्यर्थः। प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः इत्यमरः। कार्तान्तिकः सामुद्रिकज्ञः। कार्तान्तिको लक्षणज्ञः इति वैजयन्ती। पीठमर्दः कुपितस्त्रीप्रसादकः। विटः खिङ्गः। खिङ्गः पाल्लविको विटः इत्यमरः। विदूषकः। अङ्गादिवेषवैकृत्यहास्यकारी विदूषकः इति रसरत्नहारः। भिक्षुकी श्रमणा। नागरिका निपुणाः। अवस्थापनं समीपे स्थापनम्। शौचमुज्ज्वलत्वम्। परिचितपरित्यागाक्षमत्वं दाक्षिण्यम्। अल्पेनाल्पशुल्केन। अधिकगुणादृगुणग्रहणमेव महालाभ इति भावः। गान्धर्वसमागमो गान्धर्वविवाहः। गान्धर्वः समयान्मिथः। तदीयद्रव्याप-

कारित्वाचेति ?। अस्वतन्त्वाद्ग्रहणे तु तत्पित्रादय: शुल्कं परावृत्य गृह्णीयुरिति तेभ्य एव ग्रहणमिति भाव:। अला-भेऽर्थस्य धूर्त्तात्स्वशुल्कालाभे। कामस्वीकृतं केवलं सैव्रयादङ्गीकृतम्। न तु भयेनाङ्गीकृतम्। स्वामिनि प्रभौ ग्रामाध्यक्षे। अधिकरणे नागरिकसंसदि। सावनमुच्चावचा आदिभि: स्वोपयुक्तविधानम्। एकचारिणीव्रतं पातिव्रत्यम्। आहृतशिष्टानामाहृतेभ्य आकर्षितेभ्य: शिष्टानामवशिष्टानामुर्वरितानां गम्यस्य विटजनस्य धनानामित्यन्वय:। गम्यो विट:। गम्यो विट: पाल्लविको भुजङ्ग: इति भागुरि:। आसनमुपवेशनम्। प्रतिहस्त्यासन्न-गृहवेश्यापति:। प्रतिहस्ती प्रातिवेश्य: इति वैजयन्ती। सन्तक्षणैस्तनूकरणै:। तक्षू तनूकरणे। उपक्रोशनै: कुत्सनै:। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे इत्यमर:। अर्थदैस्त्यागिभि:। अनर्थप्रतिघातिभी राज-वदाज्ञाशक्तिप्रधानै:। इभ्यैराढ्यै:। अस्माभिर्लभ्येति विचार्यैत्यर्थ:। इभ्य आढ्यो धनी स्वामी इत्यमर:। संयोजनमितीत्यन्तेन मातुरधिकारं निरूप्य गणिकाधि-कारमाह—गणिकायाश्चेति। अधिकार इत्यनुषज्यते। मातृकाया मातुर्मातु:। मातुर्माता तु मातृका इति वैजयन्ती। कुटुम्बकम्। अनुकम्पायां कन्। अहार्य-निश्चया दृढनिश्चया। संस्थास्यते मरिष्यति। दु:खाकरी दु:खद:। दु:खात्प्रातिलोम्ये इति डाच्। सम्प्रतीति। लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते इति लक्षणाल्लोको-क्तिरलङ्कार:। उद्मनायतोन्मना इवाभवत्। कर्तु: क्यङ्—

इत्याचारख्यन्तः। दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः इत्यमरः। उद्गमनीयं वस्त्रयुगम्। तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् इत्यमरः। उच्चयस्तरोरादानम्। अवचयो भूमिः। नैकविधविकल्पोऽनेकप्रकारः। विकल्पः संशये भेदे इति वररुचिः। बलिः पूजोपहारः स्यात्। उपहारकर्म्म। साञ्झी इति भाषायाम। कामशासनार्थं च कामोद्दीपनार्थं च। लज्जासन्त्यरं व्रीडाशृङ्गारव्यभिचारिभावः। त्रिवर्गो धर्म्मार्थकामाः। त्रिवर्गो धर्म्मकामार्थाः इत्यमरः। अध्यात्मवादैर्ब्रह्मतत्त्वचिन्तनैः। धर्मादित इति। यथा च व्यासः—धर्म्मादर्थश्च कामश्च इति। तदनपेक्षोऽर्थकामानपेक्षः। निवृत्तिसुखप्रसूतिहेतुरक्षयसुखप्रसूतिहेतुः। ब्रह्मानन्दहेतुरिति यावत्। निवृत्तिस्तु सुखे जाड्ये अभये अक्षयेऽपि च? इति धरणिः। आत्मनः समाधानं बुद्धेरैकाग्र्यम्। आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इति धरणिः। बाह्यसाधनेषु लोकव्यवहारेषु। अत्यायतते। यतौ प्रयत्ने। गुरुतल्पं वृहस्पतिभार्य्या। तल्पं शय्याट्टदारेषु इत्यमरः। अभिसरणमभिसृतिः। दाशः कैवर्तः। कैवर्ते दाशधीवरौ इत्यमरः। आसुरविप्रलम्भनान्यकृत्याचरणानि। अकृत्याचरणं यत्तदासुरं विप्रलम्भनम् इत्यजयः। नभसीवेति। अमूर्त्तत्वान्नभसो न तत्र रजोनुषङ्ग इति भावः। मूर्तत्वेनान्यत्र वर्णनं तु बालव्यवहारसिद्धत्वेन। सन्धिः शत्रु मेलनम्। शत्रु लुण्ठनं विग्रहः। परिवारः परिकरः। तीर्थप्रतिपादनं सत्पात्रदानम्। विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् इत्यमरः।

विषयाभिव्यक्तचेतसोर्विषयोऽभिव्यक्तौ विषयीभूतौ यत्र तथाविधं चेतो ययोः। विषयमात्रविषयकचेतसोरिति यावत्। रम्यमुज्ज्वलं वस्तूद्दीपनविभावः। स्मर्यमाणं मधुरम्। यदीयं स्मरणमपि सुखजनकमिति यावत्। उदीरित इत्यत्राभिमानः सार्थक्यबुद्धिर्यत इत्यर्थः। तस्यैव कृते तदर्थम्। अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्त्तते इयम् इति कोशसारः। प्रासजत्प्रकर्षेण सक्तोऽभवत्। सुदूरमत्यन्तम्। सुदूरं दीर्घमायतम् इत्यमरः। प्रवहणं कर्णीरथः। कर्णीरथः प्रवहणम् इत्यमरः। तांगा इति भाषया। प्राणंसीत्प्रणाममकरोत्। विस्मयहर्षमूलः पौराणां विस्मयमूलः। काममञ्जरीवर्ग्याणां हर्षमूल इत्यर्थः। उदजिहीत। सर्वत्राभूदिति यावत्। ओहाङ् गतौ। महर्षिमरीचिमिति। मरीचिमावर्जितवतीव मोहितवतीस्वष्टीव श्लाघस इति तयाहमधिचिप्ता निन्दिता। यथा ऋषेर्मोहं कृत्वोर्वशी श्लाघते तद्वदियमकृतकार्य्यापि श्लाघत इति भावः। ततस्तन्मोहः क्रियते चेत्त्वया दास्यं कार्य्यमिति पणबन्धहेतुकमेतस्मिन्नर्थे प्रवर्त्तनम्। अनुशयोऽनुतापः। अनुशयो दीर्घद्वेषानुतापयोः इत्यमरः। स्वशक्तिः प्रलोभनशक्तिः। बन्धक्यासत्या बन्धक्यसती कुलटा इत्यमरः। तावत्तावदेवेत्यर्थः। यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः। अत्र सिद्धविषयहेतूत्प्रेक्षालङ्कारः- सम्भावना स्यादुत्प्रेक्षावस्तुहेतुफलात्मना। उक्तानुक्तास्पदाद्या तु सिद्धासिद्धास्पदे परे इति लक्षणात्।

अथेति। पृ ३० प ४ समकुचन्सङ्कुचितानि। कुच

निमीलने। तमनुशय्य तेन सह शयित्वा। तृतीयार्थे इत्यनोः कर्म्मप्रवचनीयत्वम्। कर्म्मप्रवचनीययुक्ते—इति द्वितीया। उदयप्रस्थः पूर्व्वपर्व्वतसानुः। तद्दावकल्पे वनाग्निसदृशे। उदयः पूर्व्वपर्व्वतः। स्नुः प्रस्थः सानुरस्त्रियाम्। दवदावौ वनानलौ इति त्रिष्वमरः। दृशिर् प्रेक्षणे। इरितो वा इति वाङ् च्लेः। ऋदृशोऽङि—इति गुणेऽमि पूर्व्वरूपे रूपमदर्शमिति। अभ्याशवर्त्तिनः समीपवर्त्तिनः। सदेशाभ्याशसविध— इत्यमरः। तुरङ्गमाणां च इति हलायुधः। अप्राक्षं पृष्टवान्। उपशमय्य शान्तिं नीत्वा। शम उपशमे। ल्यपि लघुपूर्वात् इति णेरय्। अभ्युपेत्याङ्गीकारं कृत्वा। अङ्गीकाराभ्युपगम—इत्यमरः। प्राहिणुवागमयाव। हि गतौ। अस्या एता मानेतुम्। क्रियार्थोपपदस्य— इति कर्म्मणि चतुर्थी। अहमिवेति। अर्थवद्ग्रहणे यस्मान्नानर्थकपरिग्रहः। सुरूपधनिनो वेश्या गृह्णाति धनिनं ततः इति नक्षत्रमाला। अपाङ्गदाम शृङ्गारानुभावः। अपत्रपया लज्जया। मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः इत्यमरः। मलमल्लकं कौपीनम्। आच्छादनं सम्पिधानं कौपीनं मलमल्लकम् इति वैजयन्ती। वेशो वेश्यागृहम्। वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके इति विश्वप्रकाशः प्रत्यवामृशं विचारितवान्। प्रेत्य जन्मान्तरे। प्रेत्यामुत्र भवान्तरे इत्यमरः। निरयो नरकः। स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् इत्यमरः। पिण्डाशोकः। अशोकः पिण्डिका पिण्डी इति वैजयन्ती। विविक्तसैकान्तः। विविक्तविज-

नच्छन्न—इत्यमरः। द्युम्नेन धनेन। हिरण्यं द्रविणं द्युम्नम् इत्यमरः। लुब्धाः सतृष्णाश्च ते समृद्धा ऋद्धिमन्तस्तैः पूर्णम्। लुब्धोऽभिलाषुकस्तृष्णक् इत्यमरः। अर्थानां नश्वरत्वं नाश्रयोग्यत्वम्। प्रकृतिस्थानर्थजन्योन्मादशून्यान्। अमूर्त्लब्धसमृद्धलोकान्। कर्णीसुतः स्तेयशास्त्रप्रवर्त्तकः। कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः इति हारावली। अनुप्रपद्य विचारपूर्वकं प्राप्य। धूर्तो निपुणः। धूर्तो निपुणवञ्चकौ इति वैजयन्ती। समगंस्मि सङ्गतः। अचाः पाशाः। भूमिस्तत्प्रक्षेपभूमिः। हस्तादि च तेषु। अक्षो ज्ञानार्थशकटव्यवहारेषु पाशके इति विश्वः। तन्मूलानि कूटकर्म्ममूलानि। सावलेपानि सगर्वाणि। जीवितनिरपेक्षाणि प्राणनिरपेक्षाणि। सभिकप्रत्ययात्सभिकज्ञानात्। सभिका द्यूतकारकाः इत्यमरः। व्यवहारन्यायबलेति। व्यवहारो लोकानां व्यवहारः। न्यायो युक्तिः। तयोर्बलमुपन्यासः। प्रतापः प्रागल्भ्यं तैः प्रयोजितार्थसाधने चमस्तस्मादिति प्रत्ययस्य विशेषणम्। क्वचित् प्रत्ययव्यवहारात् इति पाठः। प्रत्ययजनको व्यवहार इत्यर्थः। पक्षरक्षणानैपुणं सर्वजनानां स्वपक्षीकरणत्वे नैपुणम्। उच्चावचान्यनेकप्रकाराणि। उच्चावचं नैकभेदम् इत्यमरः। उपप्रलोभनं मोहनम्। ग्लहप्रभेदवर्णनानि पणस्यान्यथाभाववर्णनानि। अक्षेषु ग्लहः इति लत्वम्। पणोऽक्षेषु ग्लहः इत्यमरः। अन्तरान्तरा मध्यमध्य इत्यर्थः कितवो द्यूतकारः। कितवोऽक्षधूर्तो द्यूतकृत्समाः इत्यमरः। वराकः शोच्यः। वराकः साधुशोच्ययोः इति वैजयन्ती। सङ्गो निष्का-

याम्। अभ्यवहारविधिं भोजनविधिम्। दुरोदरावतारो द्यूतकारावतारः। दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् इत्यमरः। सारतो बलात्। सारो बले स्थिरांशे च इत्यमरः। कल्माषः। चित्रं किर्मीरकल्माष— इत्यमरः। नीलवसनाधोरुकपरिहितम्छादितः। अधोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् इत्यमरः। कौक्षेयकोऽसिः। कौक्षेयको मण्डलाग्रः इत्यमरः। कुलकुक्षिग्रीवाभ्यः— इति ढकञ्। फणिमुखं खननसाधनम्। सवरी इति भाषायाम्। काकली। निद्राति जागर्त्ति वेति बोधनार्थं कलमधुरध्वनिवाद्यविशेषः इति गुरुचरणाः। काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे इत्यमरः। वाद्ये भाक्तः। संदंशकम्। साण्डसी इति भाषायाम्। पुरुषशीर्षकं पुरुषशीर्षप्रतिकृतिकाष्ठमयं शिरः। इवे प्रतिकृतौ इति कन्। चूर्णं निध्यञ्जनौषधिमूलादिचर्णम्। योगवर्त्तिका। यस्याः प्रज्वालनात्सर्वत्र सर्पा एव लोचनगोचरा भवन्ति। यत्प्रभया मोहमुपयान्ति जनाः। वाणमानसूत्रं विस्तारायाममानार्थं सूत्रम्। रज्जुरालम्बरावरोहणार्थम्। भ्रमरकरण्डकं दीपनिर्वापकशलभभाजनम्। पटभाचः प्रेक्षणसाधनम्। पटभाचः प्रेक्षणकम् इति वैजयन्ती। नीवीं मूलधनम्। शतह्रदा विद्युत्। शम्पा शतह्रदा इत्यमरः। सम्पात स्फुरणम्। सम्पातस्तु समुद्गमः इति वैजयन्ती। आलोकः प्रकाशः। स्मृतं प्रकाश आलोको द्योतकश्च समाश्रये इति हलायुधः। निःसम्बाधं निःसम्मर्दम्। सङ्कटं ना तु सम्बाधः इत्यमरः। त्रासगद्गदं स्वरभङ्गः

सात्विकभाव:। अर्थवर्यो वैश्यश्रेष्ठ:। अर्य: स्वामिवैश्ययो: इति निपात: अवत्यायैतद्देशोद्भवाय। वैदेशिक: सार्थवाहो नैगमो वाणिजो वणिक् इत्यमर:। दित्सति दातुमिच्छति सति। प्रियतमदत्तसङ्केता तदगारमभिसरामि कान्तार्थिनो तु या याति सङ्केतं साभिसारिका इत्यमत:। नेयमभिसारिकेति वयम्। तादृशरतिसुखेच्छयाभिसरणाभावात्। रतार्थिनो तु सङ्केतं याति या साभिसारिका इति रसरत्नहार:। अभिसर: सहाय:। अनुप्लव: सहायश्चानुचरोऽभिसर: समा: इत्यमर:। भाण्डं भूषणम्। भाण्डं भूषणमात्रे अपि इति विश्वप्रकाश:। दीपिका हस्तदीप:। मशाल इति भाषायाम्। दीपशब्दात्संज्ञायां कन्। दीपिका हस्तदीप: स्यात् इति वैजयन्ती। नागरिकबलं नगररक्षाकर्तुर्भाषया कोतवाल इत्याख्यस्य बलं सैन्यम्। प्रवेपमानां वेपथु: (युमतीम्)। तदपेक्षया सात्विकभाव:। भयानको रस:। बाष्पेण दुर्दिने अन्धीभूते अक्षिणी यस्या:। वयं द्वौ। अस्मदो द्वयोश्च इति बहुवचनम्। दर्वीकर: सर्प:। दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशय:। नरेन्द्राभिमानी विषवैद्याभिमानी। नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते इति विश्वप्रकाश:। निर्वर्ण्य निरीक्ष्य। निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् इत्यमर:। उपक्रम्य चिकित्सयित्वा। उपक्रमश्चिकित्सा स्यात् इति वैजयन्ती। श्यावत्रर्ण: कपिशवर्ण:। श्यावास्यता विषकृत: इति माधवाचार्य्य:। श्याव: स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते इत्यमर:। अग्निसात्करिष्याम:। तदधीनवचने इति साति:।

उदारकार्येति। गत्यर्थकर्मणि—इति चतुर्थ्यन्तम्। वृत्तः कर्म। अन्तरा मध्ये। इतिशब्दः प्रकारे। इतिर्हेतुप्रकरणप्रकारादिषु इति कोशः। सलज्जं स्वरहस्यज्ञानात्। सहर्षं प्रियाप्राप्तिः। ससंभ्रममद्भुतकर्मदर्शनात्। व्यभिचारिशबलता। प्रिया दत्ता वागपहृता। अत्र परिवृत्तिरलङ्कारः। परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः इति लक्षणात्। तथाहीत्यादिना काव्यलिङ्गमपि। न जाने इति। यदिदमद्भुतं त्वत्कर्म वक्तुं न जाने न शक्नोमि। स्वप्रतिभाया अभावात्। एवं च वाणी हृतैवेति स्पष्टम्। न ते स्वशीलमिति। इदं द्रव्यस्य प्रियायाश्च समर्पणं ते चोरत्वेन व्यवहृतस्य स्वशीलं स्वभावो न भवतीत्यतोऽद्भुतवत्प्रतिभाति। प्रतिनियतेति। तत्तच्छक्तिविश्रान्तेत्यर्थः। तत्प्राय इति। तद्द्रव्यादिसमर्पणं पूर्वावदानेभ्यः पूर्वजातकर्मभ्यो न रोचते। रुच्यर्थानाम्—इति चतुर्थी। कर्म्मणां न शोभत इत्यत्र तात्पर्यम्। एतदुपलभ्य परदारपरस्वनिवृत्तिरूपम्। अवदानेभ्यः। अवदानं कर्म वृत्तम् इत्यमरः। आशयमभिप्रायः छन्दोऽभिप्राय आशयः इति। अननुमान्यानुमतिमकारयित्वा। निधनं मरणम्। प्रतिपत्तिः कर्तव्यम्। प्रतिपत्तिः कर्तव्ये प्रतिभाविज्ञातगौरवेष्वपि च इति। बालेयमित्यादि विषमालङ्कारः। विषमं वर्ण्यते यत्र घटनाननुरूपयोः इति लक्षणात्। प्रत्यवायो बाधकम्। बाधकं प्रत्यवायः स्यात् इत्यमरः। इवैवार्थे। प्रज्ञासत्वयोर्बुद्धिपराक्रमयोः। धीः प्रज्ञा शेमुषी मतिः इत्यमरः। सत्वोऽस्त्री जन्तुषु क्लीवे व्यवसाये पराक्रमे इति विश्वः। अपसर्प-

भूतया चारभूतया। अपसर्पश्चरः स्पशः। चारश्च गूढ-पुरुषः इत्यमरः। निष्पत्य निर्गत्य। पतॢ गतौ। मुषितं चोरितधनम्। नागरिकपुरुषसम्पाते नगररक्षकपुरुषसम्पाते। उपरिपुरुषं पुरुषोन्मानादधिकम्। आकृष्य गजपृष्ठस्थां रज्जुम्। मत्तगजे सर्वकालं रज्ज्वा नियन्त्रितत्वात्। ग्रैवेयं कण्ठरज्जुः। ग्रीवादिभूषणे रज्जौ ग्रैवं ग्रैवेय-मित्यपि इति वैजयन्ती। कुलकुक्षि—इति ढकञ्। परिणतो दन्तेन तिर्यक्प्रहारी। तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः इति हलायुधः। पतिताधोरणेति। पतितः समीपभूमौ सुप्तः। तदीयोरः स्थलस्य परिणतः। उरःस्थलकर्मकतिर्यग्दन्तप्रहारवानित्यर्थः। पुरीतदन्त्रम्। अन्त्रं पुरीतत् इत्यमरः। भवनं वस्त्रकटादिनिर्मितम्। न तु पाषाणनिर्मितम्। तस्या (स्य) तदानीमेवान्यदेशा-दागन्तुकतया तस्यासम्भवान्न्याय्यत्वाच्च। शाखाग्राहिकया शाखाग्रहणेन। धात्वर्थनिर्देशे ण्वुल्।

तावदिति। पृ २८ प ९ आपीडः समुद्दः। आपीडः शेखरे व्राते इत्यमरः। प्रयेतनानि प्रातः करणीयानि। प्राह्णे प्रगेऽव्ययेभ्यः इति ष्टुः। उपह्वरे रहः। चर्म्मभ-स्त्रिका। भस्त्रा चर्म्मप्रसेविका। मूलहरत्वं मूलद्रव्य-नाशकत्वम्। काष्ठवाहिकत्वं वा। उद्वेगात्। उद्वेगौ शोक-सम्भ्रमौ इति वैजयन्ती। तात पुत्र। तातस्तु जनकेऽर्भके इति। अनवसाद्याविनाश्य। मदन्यत्र चेति। यदि मया गृह्यते चेद्ब्राह्मणत्वे सत्यपि मद्यं ददातीयं भस्त्रिका मदन्येभ्यस्तु वणिग्भ्यो वारमुख्याभ्य एव वा नान्येभ्यः।

एष कल्प एष प्रकारः। दैवः प्रमाणं दैवो निर्णायकम्। प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु इति। वरिवस्यमाना शुश्रूषमाणा। वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासनम् इत्यमरः। तृणाय तृणवत्। मन्यकर्म्मण्यनादरे- इति चतुर्थी। अभूदित्यध्याहरः। अभियुक्तः सन्नद्धः। व्यवहर्त्तुं विवाहं निरोद्धुमिति भावः। विमर्दक इति। द्यूतप्रकरणे यः सभिकः।

एष्विति। पृ ३० प १७ पञ्चवीरगोष्ठे। तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः। सङ्गीतम् नृत्यगीतं च वाद्यं च सङ्गीतं त्वत्र भाषितम् इति भागुरिः। सत्रमाच्छादनम्। सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च इति वैजयन्ती। भावरसानाम्। वाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत्। स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः इति हलायुधः। नृत्योत्थितेत्यादि। अनुपलक्षितेन परकीयात्वाद्गुप्तचेष्टा। आरेचितभ्रूलतम् कन्यकात्वादिति भावः। स्वानूढ़ा स्वानुरक्ता स्त्री परकीया निगद्यते। परोढ़ा कन्यया भेदा द्विविधाः इति रसरत्नहारः। यत्तु रसमञ्जर्य्याम्—अप्रकटपरपुरुषानुशया परकीया। सा च द्विविधा। परोढ़ा कन्यका च इति कन्यकायाः परपुरुषासम्भवात्। यत्तु व्यङ्गचार्थकौमुद्याम्—भाविपुरुषापेक्षया परत्वमवसेयम् इत्यर्थवर्णनं तदपि न। भाविविवाहापेक्षया परोढ़ात्वेन द्वितीयभेदस्यैवासम्भवात्। सापदेशं सव्याजम्। व्याजोऽपदेशो लक्ष्यं च इतमरः। लोकलोचनेति। लोकलोचनमानसैरनुयाता। लोकानां लोचनमानसा-

न्वनुगच्छन्ति तस्याः पृष्ठत इति यावत्। विविक्त आस्तर्णिरहिते। अतिनिष्णातोऽतिनिपुणः। प्रवीणो निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः इत्यमरः। निनदीभ्यां स्नातेः कौशले इति षत्वम्। तन्त्रं शास्त्रम् दारिका। कुमारी दारिका कन्या इति वैजयन्ती याम्। अभिनिविशस्व इति कर्मत्वम्। समभिरतोन्नवती। पेशलं कुशलम्। अनाश्रवैवानङ्गीकृताज्ञैव। वचने स्थित आश्रवः इत्यमरः। भुजङ्गो विलासी। भुजङ्गोऽहिविलासिनोः इति विश्वः।

तत इति। पृ ३२ प १६ शाक्यभिक्षुकी बौद्धभिक्षुकी। भिक्षामटति सा। एतादृशी दूती प्रशस्ता। उपसंगृह्य वशीकृत्य। बन्धक्यासत्या। बन्धक्यसती कुलटेत्वरी इत्यमरः। मरीचिकोपोदये मुक्तागणिकानीचत्वद्योतनाय। प्रणिधिश्चारः। प्रणिधिरपसर्पश्चरः स्पशः इत्यमरः। उल्लङ्घ्य मर्यादां परित्यज्य। परस्य हेतोः परार्थमित्यर्थः। षष्ठी हेतुप्रयोगे इति षष्ठी। उपह्वरे रहसि। उपक्षिप्य प्रस्तावं कृत्वा। प्रस्तावः स्यादुपक्षेपे इति वैजयन्ती अङ्ग। आमन्त्रणेऽव्ययम्। स्युः प्याट् पाडङ्ग हे है भोः इत्यमरः। अप्यव्ययं सम्भावनायाम्। प्रत्याख्याय विपरीतं कथयित्वा। स्वगृहमगमयदिति शेषः। प्रत्याख्यानं निरसने विपरीते तु जल्पिते इत्यजयः।

तेष्विति। पृ ३४ प १२ निर्ग्रन्थिकाग्रहाच्छ्रमणिकासिद्धान्तात्। निर्ग्रन्थोऽर्हं चपणकः श्रमणो जिन इत्यपि इति कोशः। अश्म तकशेषं तुल्लिशेषम्। अश्मन्तमुदानाः

मधिश्रयणी चुल्लिरन्तिका इत्यमरः। निर्बन्धया सङ्कटं प्रापयेति फलितोऽर्थः। द्विस्त्रिश्चतुर् इति सुजन्तः पाठः। द्विस्त्रिश्चतुर्वारमित्यर्थः। निह्नुत्य गोपयित्वा। निह्नवः स्यादपह्नवे इति वैजयन्ती। अपदेश्य कथयित्वा। आमुपगमय्य स्वीकार्येत्यर्थः। उपक्षेपः प्रस्तावः। पटच्चरं जीर्णवस्त्रम्।

अस्मिन्नेति। पृ ३६ प २० यतो यस्माद्धेतोरित्यर्थः। यत्तद्यतस्ततो हेतौ इत्यमरः। पायितायाः पानविषयं कारितायाः। गण्डूषं मुखे पीत्वोज्झितम्। पीत्वोज्झितं तु गण्डूषम् इति हलायुधः॥ अहनि शुभिनि मुहूर्त्तादिगुणयुक्ते। अहन्युपायंस्त कुलपालिकाया विवाहं कृतवानित्यर्थः। शीलं स्वभावः। शीलं स्वभावे सद्वृत्ते इत्यमरः। उपचितकर्मस्वभ्यस्तकर्मसु। न्याय्येऽभ्यस्तेऽप्युपचितम् इति वैजयन्ती। प्रवर्त्तनमनुष्ठानम् व्यथितप्रियतमेति। अनेन मधुपानं कृतमतोऽयमुन्मत्त इत्येतदर्थं तया शपथादिकं कृतमिति भावः। अभिपतत इति। संमुखं पततः। विगृह्यापि नातिकुपित इत्यन्वयः। निस्त्रिंशः खड्गः। करवालनिस्त्रिंशकृपाणखड्गाः इति हेमचन्द्रः। व्यचीचरं विचारं कृतवान्। मत्परिग्रहत्वं मत्पत्नीत्वम्। पत्नीपरिजनादानमूलशापाः परिग्रहाः इत्यमरः। मदेनसा मत्पापेन। सम्प्रोर्णुतावभिभूतौ। ऊर्णुञ् आच्छादने। इहास्मिन्नवसरे। अनुबन्धः। अनुबन्धः अनुवृत्तिः। स्मरंस्त्विति। परिचयं स्मरन्ननुग्रहीतुमित्यन्वयः। आकल्पो वेषः। आकल्पवेषौ नेपथ्यम् इत्यमरः। रूपाजीवाजनो

वेश्याजनः। वारस्त्री गणिका वेश्या रूपाजीवा इत्यमरः। तव दयन्तां त्वां रक्षन्तु। दय दानगतिहिंसादानरक्षणेषु। अधीगर्थदयेशां कर्मणि इति कर्मणि षष्ठी। आरक्षकास्तु बन्दिनः इति वैजयन्ती।

अथेति॥ पृ २९ प ७ दृप्ततरो गर्वितः। गर्वितो दृप्त उद्धतः इति वैजयन्ती। सुभगमानी सुभगमात्मानं मन्यमानः। सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते इति दिवाकरः। अचिराधिष्ठितोऽभिनवावलम्बितः॥ तारुण्यं यौवनम्। कारापतिर्नागरिकः। कारणानां यातनानाम्। कारणा तु जातना तीव्रवेदना इत्यमरः। मित्रमुखस्य मित्रव्याजस्य। मुखं तु वदने मुख्ये तास्मि छद्मनि वा पुनः इति भागुरिः प्रत्याशा पुनःप्राप्तीच्छा। प्रत्याशा पुनराप्तीच्छा इति वैजयन्ती। साधीयसी दृढ़तरा। सन्धा प्रतिज्ञा। सन्धा प्रतिज्ञा मर्यादा इत्यमरः। अनुयोगव्यतिकरे प्रश्नप्रकारे। सम्पर्के च व्यतिकरः प्रकारव्रातयोरपि इत्यजयः। विरोपित उपशान्तः। विरोपित उपशान्तश्चिकित्सितः इति पालितश्चापि।

अथेति। पृ २९ प २१ दिष्ट्येत्यव्ययमानन्दे। दिष्ट्या समुपजोषं चेत्यानन्दे इत्यमरः। उपश्लिष्य सन्निकृष्य। अन्ववर्त्तें स्वसम्बन्धिवर्गवत्सादरमाचरामीति फलितोऽर्थः। समुद्गकः संपुटकः। एवमेवामरः। उपक्रान्तो वशीकृतः। उपक्रमो वशीकारे समारम्भ चिकित्सने इति वैजयन्ती। उपच्छन्दनमुपसान्त्वनम्। सान्त्वनोपच्छन्दने च सामावनुनये इति केशवः। अनुभावप्रत्ययात्प्रभाव ज्ञानात् प्रत्या-

यिताया विश्वस्तायाः संक्रमीकृत्योपायीकृत्य। प्रत्युपाये संक्रमे च निःश्रेण्यां संक्रमः स्मृतः इत्युत्पलिनी। प्राभृतान्युपायनानि। प्राभृतं तु प्रदेशनम् इत्यमरः। प्रमत्तानवहिता। प्रमादोऽनवधानता इत्यमरः। प्रच्याव्य पातयित्वा तेन कुवलयेन। प्रसक्तकुहर आरब्धसुरतः। कुहरं सुषिरे दम्भे नागलोके रतेऽपि च इत्यजयः सङ्कल्पयेच्चिन्तयेत्। दिग्धं विषलिप्तम्। विषाक्ते दिग्धलिप्तकौ इत्यमरः। वासताम्बूलमेलालवङ्गकर्पूरादिसुगन्धीकृतम। घनसारादिभिर्यत्तु वासितं वासमुच्यते इति वैजयन्ती। भूषणावयवं कानिचिद्भूषणानि। पेटिकाम। पिटकः पेटकः पेटा इत्यमरः। रागमञ्जर्या इत्युक्ता। नीत्वा स्वगृहे स्थापयित्वा। एकाकिनी कान्तकस्येति शेषपूरणम्। अतएवाग्रे अन्येद्युः इति सङ्गच्छते। अपोढान्यपविद्धानि। अपोढमपविद्धं च विकृष्टं त्यक्तमित्यपि इति वैजयन्ती। प्रातिवेश्यः। प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते इति वैजयन्ती। आदिक्षदवोचत्। व्यामो बाह्वोरन्तरालम्। व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् इत्यमरः। ऐकागारिकश्चौरः। चौरैकागारिकस्तेन दस्युतस्करमोषकाः इत्यमरः। निरदिक्षन्निर्दिष्टवान्। यद्येवमेहीति। तस्यैव प्रलोभनार्येति शेषः। तत्प्रकारमाह—त्वयेत्यादिना उपक्रान्तश्चिकित्सितः। प्रतिपद्याभ्युपगम्य। मदुक्तमिति शेषः। प्राप्तरूपं कर्तव्यम्। प्राप्तरूपं च कर्तव्यम् इति वैजयन्ती। त्वन्नय एवात्र भूयान्। नयो नीतिर्भूयसीत्यर्थः। उरगास्येन फणिमुखेन। निष्पतती

निर्गच्छतः। असिधेन्वा छुरिकया। छुरिका चासिधेनुका इत्यमरः। संस्थानं सन्निवेशः। संस्थानं सन्निवेशं च स्वरूपं च निगद्यते इति वररुचिः। विभागः प्रदेशः। छुरितम् शोभितम्। पर्य्यङ्कः शयनम्। शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः इत्यमरः। पार्ष्णिः। ग्रन्थिके घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः इत्यमरः। अनुवेल्लितं संवृत्तम्। संवृत्तः स्यात्सम्वलितः भिन्नाऽनुवलितोऽपि च इति गोपालितः। ग्रन्थिके घुटिके। ग्रन्थिके घुटिके गुल्फौ। वेल्लितं वक्रितम्। वेल्लितं वक्रमित्यपि इत्यमरः। अधिनितम्बम्। विभक्त्यर्थेऽव्ययीभावः। निमितं निक्षिप्तम्। डुमिञ् प्रक्षेपणे। आभुग्नमीषत्कुटिलम्। आभुग्नं कुटिलं भुग्नम् इत्यमरः। चीनांशुकं वस्त्रम्। अन्तरीयमधोंऽशुकम्। अन्तरीयोपसंव्यानपरिधानान्यधोंशुके इत्यमरः। नातिवलितमीषद्वलितम्। श्वासारम्भः श्वासवृत्तिः। रुचकः। रुचको मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः इति विश्वप्रकाशः। अधरकर्णपाशः। शय्यालग्नः कर्णः। अधस्ताद्भूतः कर्णपाशः। अधस्तादपि चाधरः। इदानीं द्वितीयकर्णविषयकमाह—उपरीति। परावृत्तः समुत्तानः। कर्णिका कर्णभूषणम्। एवमेवामरः। विषममयथार्थकम्। व्याविद्धं बद्धम्। सम्यक्तया न बद्धः। तादृशः शिखण्डबन्धः। संक्रान्तो विम्बितः। संक्रान्तो बिम्बितः समौ इति वैजयन्ती। निषक्तं प्रतिबिम्बितम्। पत्रक्रिया पत्रजातिः। विस्रब्धं विश्वस्तम्। समौ विश्रम्भविश्वासौ इत्यमरः। विलसनं स्फुरणम्। उत्सङ्गो मध्यः। मध्योर्ध्वदेशावुत्सङ्गौ इति वैजयन्ती। मृष्यति सहते। वर्त्त-

मानसामीप्ये वर्त्तमानवद्वा इति लट्। वसन्तबन्धुः कामः। असङ्केतितपरामृष्टासूचितैरस्पृष्टा। अतिवेलं गाढ़म्। अतिबाला इति पाठे पदमधिकं ताच्छ्यां रसानुत्पत्तेः। आघ्नीये लिङ्युत्तमपुरुषैकवचनम्। आङो यमहनः इत्यात्मनेपदम्। हन्तिर्हिंसायां वा घ्नीभावो वाच्यः इति घ्नीभावः। नागदन्ता दन्तकाः। नागदन्तास्तु दन्तकाः इति हैमः। चूलिका वर्णपट्टिका। वर्त्तिका लेखनसाधनम्। करण्डः पेटकः। वासताम्बूलवीटिकाम्। नागवल्लीपलाशानां पलाशतः। वेष्टनं वीटिका प्रोक्ता चन्द्रमन्दारवर्णयुक इति वात्स्यायनः। कर्पूरस्फुटिकाम् कर्पूरकणिकाम्। अलक्तकपाटलमलक्तं पाटलं यस्मात्। अत्यन्तरक्तमित्यर्थः। श्वेतरक्तस्तु पाटलः इत्यमरः। सुधाभित्तौ। सुधासंस्कृत्तौ। सुधा लेपोऽमृतं स्नुही इत्यमरः। व्यतिकरो विनिमयः। तपस्वी शोच्यः। प्रतिभिद्य प्रकाश्य। समापत्य संगम्य। अनामृष्टोऽस्पृष्टः। कूर्परः कफोणिः। स्यात्कफोणिस्तु कूर्परः इत्यमरः। वर्षीयस्याद्वृद्धायाः। उन्नीतमुन्नमितम्। अनाहतं नवीनवस्त्रम्। अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे इत्यमरः। परमान्नं पायसम्। परमान्नं तु पायसम् इत्यमरः। औशीरं शयनासनम्। एवमेवामरः। कामचारो यथेष्टसञ्चारः। निघ्नः परवशः। अधीनो निघ्न आयत्तः इत्यमरः। निहत्येत्यादिसत्यभाषणेन न मे पापम्। अनयैवास्य बन्धुना या स्थान्चोभयितुमुच्यत इत्यहमपि वायुनिघ्नैवैतन्मते भविष्यामीति न मां नैवघ्नोयुरीति भावः। नालच्छटस्तु शौङ्गियो विहङ्गारातिरित्यपि

इति वैजयन्ती। शान्तं पापमित्यनाकाङ्क्षे। कदर्थिता निन्दिता। निन्दितः क्लेशने चैव वर्णने च कदर्थिते इत्यजयः। विक्लवो विह्वलः। विक्लवो विह्वलः स्यात् इत्यमरः।

अर्थेति। ४७ प ११ उपसंगम्येत्यस्यावगमित्यवगमेऽन्वयः। अतः समानकर्तृकत्वम्। अभियुज्य। अभियोगस्त्वभिभवः। अवारुणद्रुद्धवान्। प्रकारं निभिद्य निर्गस्याप्रतीच्यमाण इत्यन्वयः। पारग्रामिकम्। ग्रामात्पर्य्यनुपूर्वात् इति ठञ्। अव्ययीभावात् इत्येव। शालः प्राकारः। प्राकारो वरण शालः इत्यमरः। प्रतिसरो हस्तसूत्रम्। हस्तसूत्रं प्रतिसरः। समापतितं समागतम्। अनभिसरमसहायीभूतम्। अनुप्लवः सहायश्चानुचरोऽभिसरः समाः इत्यमरः। उपावर्त्तयोप समीप आवर्त्तयानय। सम्भूय सङ्गत्य। आथर्वणः पुरोहितः आथर्वणः पुरोधाः स्याच्छान्तिपुष्टिकरो द्विजः इति कामन्दके। अप्यंमाणं दीयमानम्। यमविषयं यमदेशम्। विषयो देशे इति निपातः। अभिनिशाम्य दृष्ट्वा।

इति श्रीदशकुमारटीकायां भूषणाभिधायां
द्वितीय उच्छ्वासः।

---

अलिन्दभूमिर्बहिर्द्वाराग्रवर्त्तिचतुष्कम्। ओटा इति भाषया प्रसिद्धम्। प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके

इत्यमरः। अवाशिश्रियीति। समवप्रवि—इत्यात्मनेपदम्। किमप्यवशं भृशं वा। जैवातृकः आयुष्मन्। जैवातृकः स्यादायुष्मान् इत्यमरः। बलशम्बरयोरिवेति। तयोरित्यस्योपमानमिदम्। बलः शम्बरश्चेति द्वावप्यसुरौ। पुष्पपुरमितन्नामकं राजहंसनगरम्। मालवेन मालवदेशराजेन सह। जन्यं युद्धम्। युद्धमायोधनं जन्यम् इत्यमरः। लेशत केनचित्। कथञ्चिदिति यावत्। कथञ्चिदपि ज्ञातुं कठिनमित्यन्वयः। आद्यादिभ्य उपसंख्यानम् इति तसिः। दुर्लक्षितां ज्ञातुमशक्याम्। लेशेन चिह्नेनापि लक्षितुमवगन्तुमशक्याम्। प्रयत्नप्राणितः। प्रयत्नेन रक्षितः। गृहीत्वा यथायं जीवेत्तथापवाहित इति यावत्। स्वस्रीयो भागिनेयः। स्वस्रीयो भागिनेयः स्यात् इत्यमरः। स्वसुश्छण्। दण्डावयवं सैन्यैकदेशम्। दण्डोऽस्त्री शासने राज्ञो हिंसने दमसैन्ययोः इति भागुरिः। आदित्सुरादातुमिच्छुः। अभ्यलीयत तदन्तःप्रविष्ट इति यावत्। लुब्धको व्याधः। व्याधो मृगवधाजीवो मृगयुर्मृगलुब्धकः इत्यमरः। कपिलशवस्य मृतगोशरीरस्य। क्रोड़रन्ध्रं भुजान्तररन्ध्रम्। व्याघ्रस्यासून्व्याघ्रस्यासून् इष्वसनं धनुः। धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्। इष्वासोऽपि इत्यमरः। अलिचदृतवान्। वृष्णिपालो गोपालः। वृष्णिर्यदुषु गोपेषु इत्यजयः। स्वभर्तुरिति। मिथिलापतेरित्यर्थः। सार्थघाते सङ्घभ्रंशे। कारणविलम्बो कारणेन प्रयोजनेन विलम्बौ। आपारयन्त्यशक्नुवती। पारसामर्थ्ये। हातुं त्यक्तुम्। हतजीवितमधमं वृथाजीवितं हातुं त्यक्तुमशक्नुवतीत्यन्वयः। आक्र-

ष्टारिणा बलात्कारेण स्ववशीकृता। विकटवर्म्ममहादेवीं विकटवर्म्मणो मैथिलेन्द्रज्येष्ठभ्रातुः पुत्रस्य पत्नीम्। असृच्येताम्। सृज संसर्गने लङ्। अनुदात्त—इत्यम्। दायादा बान्धवाः। दायादौ सुतबान्धवौ इत्यमरः। प्रवृद्धमन्युर्बहुलीभूतशोका। मन्युशोकौ तु शुक्स्त्रियाम इत्यमरः। निगूढं गुप्तम्। अभ्युपपादनं सम्वर्धनम्। सम्वर्धनं छेदनं वाभ्युपपत्तिश्च पोषणम् इत्यजयः। व्यापादयितुं हन्तुम्। व्यापादनं हिंसनं च घातनं मारणं तथा इति भागुरिः। अनुजाः विकटवर्म्मणः कनिष्ठा भ्रातरः। तैरपि घटन्ते मनुजैः साकं पौरजना घटन्ते मिलन्ति। एवं तस्मिन्हतेऽपि तस्यानुजा राज्यं करिष्यन्ति। तथा च मत्कृतं व्यापादनं व्यर्थमेव भवेदिति भावः पितरावपि यावत्। यावत्तावच्च साकल्ये इत्यमरः। सम्विदाते जानीतः। प्रहारवर्म्मण्यधि प्रहारवर्माधीनाः। अधिरीश्वरे इति कर्म्मप्रवचनीयसंज्ञा। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी इति सप्तमी भागधेयं भाग्यम्। दैवं दिष्टं भागधेयम् इत्यमरः। कटशय्यां तृणशय्याम्। कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च इति विश्वः। उपधिना कपटेन। कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इति। जालं कपटम्। जालं समूह आनाये गवाक्षे कपटेऽपि च इति वैजयन्ती।

चिन्तयतीति। पृ ७७ प १४ जड़ीकृत इव शीतलीकृत इव। शिशिरो जड़ः। तुषारः शीतलः शीतः इत्यमरः। अवसायितं समापितम्। जाल्मस्य क्षुद्रकस्य। निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः इत्यमरः।

कच्चित्प्रश्ने । कामप्रवेदने कच्चित् इत्यमरः। भर्तृदारकं राजपुत्रम्। राजा भट्टारको देवस्तत्सुता भर्तृदारिका इत्यमरः। पुंसि भर्तृदारकः। यदत्र वक्तव्यं तदुक्तं प्राक्। अवरोधनम्। शुभुजामन्तःपुरं स्यादवरोधनम् इत्यमरः। तातस्थ्याच्छाश्रम्। मानं कोपम्। मानः कोपो मन्यु-र्द्विधा प्रणयेर्ष्यास्तु भेदतः। द्वयोः प्रणयमानः स्यात्कोपो यः कारणं विना। यत्पुरः प्रियया सङ्गे दृष्टेर्ष्यानुमितेषु ते। ईर्ष्या मानो भवेत्स्त्रीणाम् इत्यादि रसरत्नहारः। अम्बां मातरम्। अम्बा माता इत्यमरः। उदर्कस्वादुन उत्तर-फलस्वादुनः। उदर्कः फलमुत्तरम् इत्यमरः।

केषुचिदिति। पृ ५४ प १७ चित्रीयमाणा विस्मय-माना। नमोवरिवश्चित्रङः क्यच् इति क्यजन्तादात्मने-पदम्। अथ तु तिष्ठत्वित्यर्थः। तिष्ठत्वित्यभिधेयेऽस्मि-न्नास्तामथ तु चाव्ययम् इत्यजयः। विप्रलम्भः प्रतार-णम्। अवरुद्धो गूढः। समाधिश्चित्तवृत्तिनिरोधः। गाढ-त्वदर्शनाय दृढत्वज्ञानाय। गाढबाढदृढानि च इत्यमरः। प्राणो बलम्। सत्त्वं पराक्रमः। सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे इति वैजयन्ती। उपपन्नसंस्थानोऽनुगु-णावयवः। उपपन्नं समृद्धे च सम्पन्नेऽनुगुणेऽपि च इति केशवः। संस्थानं मरणे गात्रे सन्निवेशे च वर्त्तते इति भागुरिः। दुर्विकत्थनः। विकत्थनः स्तवः श्लाघा इति हलायुधः। नाटकीयां नृत्यकरीम्। नाटकीयो नृत्यकरः इत्यजयः। रमयन्तिकामेतन्नाम्नीम्।

तत्र इति। पृ ५७ प १४ प्रमदवनं क्रीड़ावनम्।

विज्ञेयं प्रमदवनं पुरोपकण्ठे शुद्धान्तैः सह रमते नृपस्तु यस्मिन् इति हलायुधः । आचार्य्यकमाचार्यभावम् । गुरुपरिग्रहो वृहस्पतिपत्नी । पत्नीपरिजनादानमूलशापाः परिग्रहाः इत्यमरः । धर्म्मपीड़ा धर्म्मबाधा । अभिसन्धिरुद्योगः । अभिसन्धिः समुद्योगः इति भागुरिः । दुर्विकल्पो दुर्विचारः ।

अन्येद्युरिति । पृ ५८ प १३ कार्दमिकनिवसनः । कर्दमेनाक्तं कार्दमिकम् । शकलकर्दमाभ्यामुपसंख्यानम् इति ठक् । परिकरः । कक्षाबन्धः परिकरः इति वैजयन्ती । उपस्करः साधनम् । साधनं स्यादुपस्करे इति वैजयन्ती । अभिज्ञानानि चिह्नानि । उपखातं परिखासमीपे । समीप्येऽव्ययीभावः शायितयेत्यादि । तथा च कामन्दकः—पृथुसीममहाखातमुच्चप्राकारणे पुरः । समासेत्पुरं शैलसरिन्मरुवनाश्रयम् इति पक्वेष्टकचितेन । इष्टकेषीकामालानाम् इति ह्रस्वः । सोपानपथेनारोहणेन । आरोहणं स्यात्सोपानम् इत्यमरः । उत्तराहिदूरत्ते उदक् प्रदेशम् । आहि च दूरे इत्याहिप्रत्ययः । पिण्डीखण्डं रक्ताशोकखण्डम् । रक्ताशोकस्तु पिण्डी स्यात् इति वैजयन्ती । भाण्डीरः । भाण्डीरो मल्लिकाचयः इत्यजयः । अवाचीं दक्षिणाम् । कुरण्टः पीतकुरण्टः । पीतपुष्पा सहचरी । तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः इत्यमरः । दन्तमयस्तालवृन्तः । व्यजनं तालवृन्तकम् इत्यमरः । भृङ्गारः । भाषया झारी इति प्रसिद्धः । भृङ्गारः कनकालुका इत्यमरः । परिमलं जनमनोहरं गन्धम् ।

विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः। असुधीमकामा तीव्रमन्मथा। सुषीमः शिशिरो जड़ः इत्यमरः। विप्रलब्धा वञ्चिता। विप्रलब्धस्तु वञ्चितः इत्यमरः। विप्रलब्धा प्रियं तत्रादृष्ट्वा सन्तापसङ्कुला इति रसरत्नहारः। महारजनं कुसुम्भम्। स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि इत्यमरः। मञ्जुलैर्मनोहरैः। मनोज्ञं मञ्जु मञ्जुलम् इत्यमरः। सन्नाह्यरथो युद्धरथः। अवसितार्थां कृतकृत्याम्। जातरेतःपातामित्यर्थः। चिकुरितं वलितम्। मानसीं शारीरीं च धारणाम्। मुष्कशिरायाः मूलं दृढमङ्गुल्या निपीड्य रतिकाले। चिन्तान्तरनिहितमनाः कुम्भितपवनश्रुतिं जयति इति अभिकामयमानां माभिनन्दति। ध्वनितं चैतदभिज्ञानशाकुन्तले—लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमिप्सितो भवेत् इति। भवत्यै। रुच्यर्थानाम्—इति चतुर्थी। विसस्वादोऽन्यथाभावः। विसस्वादोऽन्यथाभावः इति वैजयन्ती। सम्प्रधार्य। शृङ्गाटिकायां चतुष्पथे। शृङ्गाटकचतुष्पथे इत्यमरः। संज्ञपितं विशसितम्। नर्मस्मितं परिहासस्मितम्। द्रवकेलिपरीहासाः क्रीड़ा लीला च नर्म च इत्यमरः। धूर्तो वञ्चकः। पापो धूर्त्तस्तु वञ्चकः इत्यमरः।

अथेति पृ ६४ प ७ उदैरयदुद्गमत्। निशान्तोद्यानं गृहोद्यानम्। निशान्तपस्त्यसदनम् इत्यमरः। पादाग्रं प्रपदम्। एवमेवामरः। पादोत्क्षेपणादेव पार्ष्णुत्क्षेपेऽपि गोबलीवर्दन्यायात्पृथगुक्तिः। ग्रन्थिके घुटिके गुल्फौ

पुमान्पार्ष्णिरधो द्वयोः इत्यमरः। प्रमदवनशृङ्गाटिकायाम्। अत्र कामन्दकः—नहि देवीगृहं गच्छेदात्मीयात्तान्निवेशनात्। अत्यन्तवल्लभोऽपीह विश्वासं स्त्रीषु न व्रजेत्। देवीगृहगतं भ्राता भद्रसेनममारयत्। मातुः शय्यान्तरे लीनः कारूषं चौरसः सुतः। लाजान्विषेण संयोज्य मधुनेति विलोभितम्। देवी तु काशिराजेन्द्रं निजघान रहोगतम्। विषाक्तेन च सौवीरं मेखलामणिना नृपम्। नूपुरेण च वैरन्त्यं जारूषं दर्पणेन च। वेण्यां शस्त्रं समाधाय तथैव च विदूरथम्। अहितत्तं परिहरेच्छत्री चापि प्रयोजयेत् इति। व्यापाद्य हत्वा। पुण्ड्रा देशविशेषाः। गृहपतिर्ग्रामाध्यक्षः। दण्डधरः सेनापतिः। उद्धारकर्मणि निर्यापकर्मणि। भस्मसाद्भस्मावशेषः। विभाषा साति कार्त्स्न्ये इति सातिः। ऊरूपपीड़म्। सप्तम्यां चोपपीड़रुध—इति णमुल्। पितृवत्पितरीव। तत्र तस्येव इति वतिः। न साम्प्रतं सुभिक्षाः पुण्ड्राः इति पाठः। यानकालमाह याज्ञवल्क्यः—यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् इति। गुणैर्लब्धे धनतृणादिभिः इति विज्ञानेश्वरो व्याख्यातवान्। नाशयितुं विचारितः। आभिज्ञानिकमभिज्ञानम्। स्वार्थे ठक्। प्रत्यपादयन्। प्रदानं प्रतिपादनम् इति वैजयन्ती। ददुरित्यर्थः। प्रसाधितात्मोपयुक्तबुद्धिः। आत्मा यत्नो धृतिर्बुद्धिः इत्यमरः। दुर्भगान्विरसान्।

श्रुत्वेति। पृ ६८ प पारतल्पिकं परदारगामि

नम्। तल्पं शय्याट्टदारेषु इत्यमरः। अरीरधदशाधयत्। राध साध संसिद्धौ।

इति दशकुमारटीकायां भूषणाभिधायां
तृतीय उच्छ्वासः।

---

एककर्मा समानकर्मा। कर्म च राजवाहनान्वेषणम्। ऊर्मिमालिनेमिं समुद्रावधिकाम्। नेमिस्तु चक्रधारायां सीमायां च इति। आयसपरिघोऽयोनिर्मितोऽर्गलः। परिघः परिघातेऽस्त्रे इत्यमरः। परिकरं कचावन्धनम्। उच्छूनं प्रवृद्धम्। कार्पण्यं चीणत्वम्। साहसानुवादी साहसस्य सदृशः। सदृक्सदृशसवादौसजातीयानुवादिनः इति दण्डी। कृच्छ्रं दुःखम्। स्यात्कष्टं कृच्छ्रमाभीलम् इत्यमरः। किमपि साहाय्यावकाशस्तदेनं पृच्छेयमित्यन्वयः। निर्वर्ण्य दृष्ट्वा। निवर्णनं तु निध्यानं दर्शनालोकनेक्षणम् इत्यमरः। पूर्वेषुकामचरः। इषुकाम इति देशस्य संज्ञा। दैवच्छन्दो दैववशः अभिप्रायवशौ छन्दौ इत्यमरः। रूपाभिग्राहितो लोप्त्रेण सह संगृहीतः। चोरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु वहनम् इत्यमरः। मण्डलितकरो मण्डलाक्रांतशुण्डादण्डः। परिणमंस्तिर्यग्दन्तप्रहारं कर्त्तुं नमनं परिणमनम्। दारुखण्डसुषिरे प्रविष्टभुजदण्डिमचण्डघटितं तादृशदारुखण्डाग्रेण ताडितं प्रतिमानं दन्तान्तरालं यस्य सः। प्रतिमानं प्रतिच्छा-

आगजदन्तान्तरालयोः इति विश्वः। अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् इत्यमरः। आक्रुष्टो निन्दितः। कुञ्जरापसदो गजाधमः। निहीनोऽपसदो जाल्मः इत्यमरः। अपसदे कुत्सने इति समासः। वारणेनाङ्कुशेन। निर्य्याणभागेऽपाङ्गदेशे। अपाङ्गदेशो निर्य्याणम् इत्यमरः। मया पूर्णभद्रेन। स्वचरितम्। अत्र स्वः कामपालः। विश्रुता लोके प्रसिद्धा धीरस्य विश्रुतधीः। श्रुत ऋषिरधीतवेदः। ऋत्यकः इति प्रकृतिभावः। प्रज्ञागुणेषु बुद्धिगुणेषु। ते चोक्ताः कामन्दके—शुश्रूषाग्रहणं चैव श्रवणं चावधारणम्। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः इति। द्वैमातुरो द्वयोर्मात्रोरपत्यम्। मातुरुत्संख्या—इत्युदादेशः। मदनदमनः शिवः। आपन्नसत्त्वा गुर्विणी। आसन्नसत्त्वा स्याद्गुर्विणी इत्यमरः। आक्रीडगिरिरुद्यानपर्वतः। पुमानक्रीड उद्यानम् इत्यमरः। शबर्य्यो म्लेच्छभेदस्त्रिया। भेदाः किरातशबरपुलिन्दाः इत्यमरः। आच्छिद्यापहृत्य। उत्तंसितेन। शेखरितेन। आस्थानीं सभाम्। आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः इत्यमरः। अनेकमृत्युमुखपरिभ्रष्टं कान्तिमतीसखीभिः क्रीडागिरौ त्यक्तं शबर्य्या च श्मशाने। एकपिङ्गः कुबेरः। यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः इत्यमरः। कृतान्तयोगाद्दैवयोगात्। कृतान्तमुखपरिभ्रष्टं यमसुखभ्रष्टम्। कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु इत्यमरः। मातङ्गपतिना हन्यमानस्तमेव हत्वा पलायितस्तम्। हित्वाणि दिनानि। संख्य-

याव्यय—इति बहुव्रीहिः। बहुव्रीहौ संख्येये—इति डच्। वैरनिर्यातनं प्रतीकारः। वैरशुद्धिः प्रतिकारो वैरनिर्यातनम् इत्यमरः। वासगृहं गर्भागारम्। गर्भागारं वासगृहम् इत्यमरः। विहरामि विलासिनीभिः सहेत्यन्ता कामपालोक्तिः। स एवमित्यादि पूर्णभद्रोक्तिः। अलसकेन चयेण। चयस्त्वलसको मतः इति वैजयन्ती। ज्यायसि पूर्वजे। वर्षीयान्दशमी ज्यायान् पूर्वजः इत्यमरः। पञ्चवर्षदेशीयम्। ईषदसमाप्तपञ्चदशवर्षम्। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। अशङ्कितावोध्यत। चिणोति पुरा चपिष्यति। यावत् पुरा—इति भविष्यति लट्। दूषितो भेदितः। दुष वैकृत्ये। णिचि कृत्कृते दोषोऽणौ इत्युपधाया ऊत्वम्। यक्षिणी तारावली। अयथापूर्वमयथाभावम्। राजमहिषी सिंहघोषस्त्री। आयथातथ्येन। ब्राह्मणादित्वाद्भावे ष्यञ्। यथातथयथापुरयोः पर्यायेण इति वृद्धिः। कलुषिताशया कलुषितबुद्धिः। सङ्गीत मन्नामाभिधानेनापदिष्टा व्यवहृता गोत्रस्खलनापराधाभ्यामवती गता। गोत्रं नाम्निकुले बाले इति वैजयन्ती। अथ स्वस्त्रीमुखात्तारावलीकामपालयोर्वियोगश्रवणोत्तरम्। अवन्ध्यत्। लब्धावसरत्वादिति भावः। मोक्तुकामस्त्यक्तुमिच्छुः। लुम्पेदवश्यमः कृत्ये तुं काममनसोऽपि। समो वा हिततयोर्मांसस्य पचि युज्घञोः इति मकारलोपः। सङ्कुले सम्बाधे। शस्त्रिका छुरिका। स्याच्छस्त्री चासिपुत्री च छुरिका इत्यमरः। आशीविषः सर्पः। आशीविषो विषधरः इत्यमरः। उदैरयदुद्गमयत्। ईर गतौ

कम्पने च। अभिजनो गोत्रम्। सन्ततिर्गोत्रजननकुला-न्यभिजनान्वयौ इत्यमरः। काण्डपटपरिचिप्ते तिरस्क-रिणीपरिवृते। अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी। बाह्यकक्षा। कक्षा प्रकोष्ठे हर्म्यादी काञ्च्यां मध्येभबन्धने इत्यमरः। तूर्णम्। सत्वरं चपलं तूर्णम् इत्यमरः। चिञ्चाम्लिका। अम्लिका तिन्तिणी चिञ्चा इति वैजयन्ती। उद्दुरध्वनिर्निर्गलध्वनिः। उद्दुरं तु विशृङ्खलम्। विवृतगुह्य आविस्कृतरहस्यः प्राड्विवाको व्यवहारनिर्णायकः। द्रष्टरि व्यवहाराणां प्राड्विवाका-चदर्शकौ इत्यमरः। जनादुपलीनो जनादन्तर्हितः। जनैरनुपलक्षित इत्यर्थः। अन्तर्धौ येनादर्शनमिच्छति इत्यपादानत्वम्। दर्वीकरः सर्पः। दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः इत्यमरः।

अथेति। पृ ७८ प २१ दर्भशय्यामधिशाय्य। अधिशी-ङ्स्थासां कर्म्म इति कर्म्मत्वम्। अन्यादृश्यन्यसमा। त्यदादिषु दृशोऽनालोचने कञ् च इति सूत्रे सामान्य-योश्चेति वक्तव्यम् इति कञ्। आसर्वनाम्नः इत्यात्वम्। दुर्दान्तं दुःखेन दमनीयम्।

तथेति। पृ ८२ प ४ विज्ञापितोदन्तो विज्ञापित-वृत्तान्तः। वार्त्ता प्रवृत्तिर्वृत्तान्तः इत्यमरः। पारग्रामि-कम्। मिताक्षरायां विज्ञानेश्वरः—उपरुध्यारिमासीत-राष्ट्रं चास्योपपीड़येत्। दूषयेच्चास्य सततं यवसान्नो-दकेन्धनम् इति। प्रायः प्रायुङ्क्त। प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु इति वैजयन्ती। बहुलं प्रयुक्तवान्।

त्यर्थः। स्त्रीदवसितं स्वगृहम्। गृहं गेहोदवसितम् इत्यमरः। निर्धुनानातितरां निरस्यन्ती। अङ्गनासमाजेऽङ्गनासमूहे। पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् इत्यमरः। कस्य हेतोः। सर्वनाम्नस्तृतीया च इति षष्ठी। द्विजातिवृषभाद्विजश्रेष्ठात्। वृषले मूषके श्रेष्ठे सुकृते वृषभे वृषः इति। सत्यर्थे कार्यवस्तुनि सति। अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः। वो युष्मान्। उदपादि। चिण् ते पदः इति कर्त्तरि चिण्। चिणो लुक् इति प्रत्ययस्य लुक्। उत्कीर्णम्। समावुत्कीर्णविन्यासौ प्रेक्षागृहं नृत्यप्रेक्षणं गृहम्। प्रेक्षा नृत्येक्षणं प्रज्ञा। अक्षय्यम्। क्षय्यजय्यौ शक्यार्थे इति निपाततोऽशक्यक्षयमित्यर्थः। चित्रे। किष्कुविष्कम्भम्। किष्कुर्हस्ते वितस्तौ च इत्यमरः। परिणाहस्तु निष्कम्भः इति वैजयन्ती। जविग्राहम्। समूलाकृतजीवेषु हनकृञ्ग्रहः इति णमुल्। स्त्रैणं स्त्रीसमूहः। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति समूहार्थे नञ्। सन्दानितं बद्धम्। तस्या दारिकाया आचारवतीकन्यकायाः। अस्मदायत्तमस्मदधीनम्। अधीनो निघ्न आयत्तः इत्यमरः। भवत्पादानां भक्तिमान्। राजवाहनसन्तोषार्थेयमुक्तिः। पूर्वं तु कथा नाविष्कृता। श्वशुरः पितृव्यश्वशुरः। कान्तिमतीसम्बन्धान्मातुलः।

इति श्रीदशकुमारटीकायां भूषणाभिधायां
चतुर्थ उच्छ्वासः।

---

अभ्रंकषस्य व्योमस्पृशः। मेघस्पृशो वा। द्योदिवौ द्वे स्त्रिया-मभ्रं व्योम पुष्करमम्बरम्। अभ्रं मेघो वारिवाहः इत्यु-भयत्रामरः। सर्वकूलाभ्रकरीषेषु कषः इति खच्। अरुर्द्वि-षदजन्तस्य—इति मुम्। उपस्पृश्याचम्य। उपस्पर्शस्त्वाच-मनम् इत्यमरः। एकाकिन एकस्य। एकाकी त्वेक एककः इत्यमरः। इत्युपधायेति। उक्तेति मध्ये शेषः। तथा च इत्युक्तोपधाय वामभुजमित्यन्वयः। असुखायिषत। सुखा-दिभ्यः कर्तृवेदनायाम् इति क्यङ्। लुङि सिच इट्। आह्लादिषत। ह्लादी सुखे च। आत्मनेपदी लुङ्। अभ्य-मनायिष्ट। कर्तुः क्यङ्—इति क्यङि सलोमस इति इषेरु-दत्त्वनेऽर्थं इडागमः। पर्यस्फुरद्दक्षिणभुजः। दक्षिणभुजस्पन्द इष्टसमागमसूचकः। तरङ्गिते वसन्तराजः—स्पन्दो भुजस्ये-ष्टसमागमनाय इति। वर्णितं कालिदासेन—तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत्। वामे-तरः संशयमस्य बाहुः केयुरबन्धोच्छ्वसितैर्नुनोद इति। समया सौधभित्ति सौधभित्तेः समीपे। समया निकषा चेति सामीप्ये वर्ततेऽव्ययम्। अभितः परितः समया निकषा—इति द्वितीया। क्षीरसागरदुकूलं श्वेतकौशेयम्। क्षीरोदक इति भाषायां प्रसिद्धम्। भयसाध्वसेति। घोर-साध्वसमूर्च्छितताम्। भयं प्रतिभयं घोरे इति विश्वप्र-काशः। निश्वासमातरिश्वभिर्निश्वासमारुतैः। श्वसनः स्पर्शनो वायुर्मातरिश्वा सदा गतिः इत्यमरः। ऊर्ध्वाण्डक-पालः। आकाश इत्यर्थः। अप एव ससार्जादौ तासु वीर्य-मवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मि-

ञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। नखैर्हिरण्यगर्भः स तदण्डं बिभिदे समम। ताभ्यां च शकलाभ्यां स दिवं भूमिं विनिर्ममे इति मनुवचनात्। शक्तिध्वजशिखरशूलोत्सेधम्। शक्तिध्वजः कुमारस्तस्य शिखरं तदालयाग्रं तत्र शूलं तदुत्सेध उच्छ्रायो यस्य सः। शूलमस्त्री रुगायुधम् इति विश्वः। सौधोऽस्त्री राजसदनम् इत्यमरः। कुतस्त्यम्। अव्ययात्त्यप्। शयनतलम्। अधिशीङ्स्थासाम्—इति कर्मत्वम्। देवयोषा देवस्त्री। स्त्री योषिदबला योषा इत्यमरः। संवाह्यमाना मर्द्यमाना। स्यान्मर्दनं सम्बाहनम् इत्यमरः। यतो निद्राती न देवयोषा। देवानामस्वप्नत्वात्। आदित्या ऋभवोऽस्वप्नाः इत्यमरः। वृन्तम्। वृन्तं प्रसवबन्धनम् इत्यमरः। शबलितं नानावर्णम्। वर्णकमङ्गरागः। वर्णकोऽस्त्री विलेपनम् इत्यमरः। वाससी वस्त्रयुग्मम्। परीभोगः। उपसर्गस्य घञि—इति दीर्घः। अनङ्गबाणपातमुक्ताशङ्कतया पुरुषसङ्गानभिज्ञतया। विरहिणीत्वाभावादिति भावः। अनतिक्रान्तशिष्टमर्यादचेतसो धर्मात्मनोऽस्यामासक्तिरत इयं मदुपभोगभोग्येति व्यङ्ग्यम्। तथा च कालिदासः—असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः। सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः इति। अथाहं वातःपरम्। अहं त्वित्यर्थः। उत्तानसुप्तेयम। आविद्धरागसाध्वसम्। आविद्धे रागसाध्वसे यस्यां क्रियायाम्। अनुपमस्त्रीलाभाद्रागः। यद्येष्टं स्पष्टं चेतदार्त्तरवं भविष्यतीति साध्वसम्। किमपि। किमप्यव्यपदेश्ये स्यादीषन्मात्रे परात्मनि इत्यजयः। लब्धसुप्तः।

तत्त्वं व्यापारं लक्षयन्सुप्त इवेत्यर्थः। रौमोद्गेदवत् मदङ्ग-सङ्गादिति भावः। विजृम्भिका जृम्भणम्। जृम्भिका गात्र-भङ्गः स्यात् इत्यजयः। जृभि गात्रविनामे। मन्यराङ्गी साल-साङ्गी। त्वङ्गचलत् त्वगि कम्पने। कषायः पीडाविशेषः। अपूर्वपुरुषदर्शनात्त्रासः। आगमप्रकारानवबोधाद्विस्मयः। तदङ्गसङ्गसुखानुभवाद्धर्षः। तत एव रागः। ततो यदयं मां बलात्कारेण करिष्यति स्वाङ्के ततः किं भवेदिति शङ्का। ततो भूषणादीनामस्थाने निन्यासः। अस्रस्तमपि वस्त्रं भूषणं वा स्रस्तमिति पुनस्तद्देशे स्थाप्यते। यथास्थितमपि तद्देशा-चाल्यते शङ्कापराधीनचित्तेन जनेन। अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः इति रसरत्नहारः। क्रीडान्तरा मध्ये येषां तानि। साध्वसेनापरिचितपुरुषदर्शनेनायासेन तदङ्ग-सङ्गानङ्गपीडया सम्बध्यमानस्वेदपुलकानि। सात्त्विकभावा-विर्भावादिति भावः। मधुरकूणितेति। मधुरं यथा तथा कूणिताः सङ्कोचितास्त्रयोभागा अपाङ्गो मध्यो नासिकास-मीपगश्च यस्येत्यर्थः। कूण सङ्कोचे। चुरादिः। इदन्तः। पूर्व-काये। पूर्वापराधरोत्तरम् इत्येकदेशो समासः। व्यभासो-द्भाविताभूत्। यावदायुः। यावदवधारणे इत्यव्ययीभावः।

अथेति। पृ ८८ प १८ वालापिनीपलक्षिता। चीरचू-डिका सुवासिनीभिर्हस्तेषु ध्रियमाणः खड्गशृङ्गादिनिर्मितो वलयाकृतिभूषणविशेषः। मगधराजो राजहंसः। राज-राजप्रवर्तितां कुबेरप्रोक्ताम्। राजराजो धनाधिपः इत्य-मरः। शौनकः शूद्रक इत्यादिकान्। मणिभद्रस्यात्मजा तारावली। वो जननी भवत्विलंपेचया; कनिष्ठस्य पितृ-

व्यस्य पत्नीति। निष्कारणकोपात्तोत्रस्खलनकोपात्। चण्डि-कायामत्यन्तकोपवत्याम्। मुक्तशापा नष्टशापा सती इति प्रस्थितायामिति बुद्ध्या प्रस्थितायामित्यर्थः। निर्विश्यानु-भूय। आत्मालोकेत्यादि क्रियाविशेषणम्। अलीकं त्वप्रि-येऽनृते इत्यमरः। लब्धलक्षो लब्धावसरः।

मार्गं इति। पृ ६२ प १४ निगमः। निगमो विषये वेदे पुरे पथि वणिक्पथे। नैगमानां वणिजाम्। नैगमो वाणिजो वणिक् इत्यमरः। ताम्रचूडः कुक्कुटः। कृकवाकु-स्ताम्रचूडः इत्यमरः। नारिकेलजातिर्बलाकाजातिश्चेति द्वौ कुक्कुटविशेषौ। दीर्घग्रीवः सितवपुर्महाप्राणः स्तव-न्मनाः। बलाका जातिरित्युक्तस्तदन्यो नालिकेरजः इति वैजयन्ती। वाटः श्रेणी। वाटः पुन्नान् पथिश्रेण्योः। उपहस्तिका। पूगाद्यावपनावस्त्रभस्त्रिका चोपहस्तिका इति वैजयन्ती। भाषया चञ्ची इति प्रसिद्धा। कण्ठीरवरवः सिंहनादः। जितश्वासी। जित इति कर्मणिप्रत्ययः। अरण्यानी। महारण्यमरण्यानी इत्यमरः। सङ्कथा मिथो भाषणम्। अस्ति तदिति। तत्पूर्वदृष्टम्। रूपसम्वादा-द्रूपदर्शनात्। खर्वटो ग्रामः। स्थाने युक्तम्। प्रत्यादेशो निरसनम्। प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृति इत्यमरः। प्राणाः। पुंसि भूम्न्यसवः प्राणाः इत्यमरः। समापत्तिदृष्टा। समापत्तिर्यदृच्छासङ्गतिः। मर्म्मणि। जीवस्थानं भवेन्मर्म्म इति हलायुधः। धन्वन्तरिर्देववैद्यः। संस्थिता मृता। परेतप्रेतसंस्थिताः इत्यमरः। विद्यामयं विद्यारूपम्। शुल्कं जामात्रा देयं वस्तु। आपन्नानां प्राप्ता

पत्तीनां शरणं रक्षकम् । शरणं गृहरक्षित्रोः इत्यमरः । प्रजानां मातृपितृस्थानीयं विग्रहे । अधीती । इष्टादिभ्यश्च इति कर्त्तरिनिः । क्तस्येन । विषयस्य कर्म्मण्युपसंख्यानाम इति सप्तमी । इतिहासः पुरावृत्तम् । आख्यायिकोपलब्धार्थी इत्यमरो द्वयोः । प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना । गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता । वृत्तं व्याख्यायते तस्या नायकेनात्मचेष्टितम् । वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च । कवेरभिप्रायकृतैरङ्कनैः कैश्चिदाननैः इति । सोपनिषदोऽर्थशास्त्रस्य कर्म्मज्ञानमीमांसयोः । शक्तः प्रियम्वदः । शक्तः प्रियम्वदे इत्यमरः । वैलक्ष्यं परं वैलक्ष्यमुपेत इत्यन्वयः । समनुनेतुं खेदं दूरीकर्तुम् । चिरस्य बहुकालम् । रुदित्वा क्रन्दनं कृत्वा । मधुकर आर्द्रं सुमनसमिवेत्यन्वयः । सन्दोहः समूहः ।

श्रुत्वेति पृ ९८ प २१ विलासप्रायं विलासबहुलम् । ऊर्जितमुन्नतम् ।

इति श्रीदशकुमारटीकायां भूषणाभिधायां
पञ्चम उच्छ्वासः ।

——

देव । सुह्मेष्वग्निकोणदिक्स्थेषु । दामलिप्ताह्वस्य दामलिप्तनामधेयस्य अतिमुक्तलतामण्डपे । अतिमुक्तः पुण्ड्रकः स्यात् इत्यमरः । परिवादिनीद्वितीयो वीणासहायः । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी इत्यमरः । विन्ध्यवासिन्या देव्याः । कन्दुकावती । मतौ बह्वचोऽनजिरादीनाम्

इति दीर्घः संज्ञायाम्। सोमापीडां चन्द्रशेखराम्। आपीडशेखरौ इत्यमरः। धात्रेयिका। धात्रुपमाला तत्कन्या धात्रेयिका। स्त्रीभ्यो ढक्।

अस्मिन्नेति। पृ १०१ प २ सुदृष्टं सम्यग्दृष्टम्। निष्प्रतिक्रियाजीवनोपायान्तरशून्यान् वेशजनो वेश्याजनः। उदैरतोदगच्छन्। आगच्छतम्। द्विवचनमेतत्। चित्रीयाविष्टचित्तौ विस्मयाविष्टचित्तः। विस्मयोद्भुतमाश्चर्यं चित्रम् इत्यमरः। चित्रीया। नमोवरिवस—इति क्यजन्तात् अप्रत्ययात् इत्यप्रत्ययः स्त्रियाम्। किमियमित्याद्याक्षेपालङ्कारः। आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् इति लक्षणात्। अयातयाममपरिभुक्तम् जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्। रूषिताक्षं रञ्जितम्। रूष हिंसायाम्। विलम्बितद्रुतमध्यलये। विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्। तालः कालक्रियामानम् इत्यमरः। चर्णपदम्। गत्यागत्योरानुलोम्यतो यन्त्रनाधिक्यक्षेपणमिति। गीतमार्गमाचरत्। दशपदचङ्क्रमणं तु गीतमार्गः एवमनेककरणमधुरमनेकव्यापाररम्यम्। उच्चावचमनेकभेदम्। उच्चावचं नैकभेदम् इत्यमरः। अवघट्टयन्त्यालोडयन्तो। गोमूत्रिकाप्रचारेषु। गोमूत्रिकेति विहङ्गिसारः शातक्रदो मतः। घनदर्शितमतिमात्रदर्शितं मेघदर्शितं च। विभ्रमः स्फुरणम्। लयसम्वादि लयानुरोधि। अञ्चितं सम्यग्यथा तथोत्थित उन्नतः पृथुर्महानितम्बस्तस्य बिम्बं तत्र लम्बितं चेलं वस्त्रं यत्रेत्यर्थः। आघट्टीतः समीकृतः। क्वणितः शब्दवान्मेखला—

गुणो यत्रेत्यर्थः। त्रिकं त्रिकाटिकायां च पृष्ठवंशाधरे त्रिकम् इति वैजयन्ती। असक्तदित्यादि। वनैटी इति लोकप्रसिद्धं क्रीडनकम्। अन्यत् पूर्वदृष्टम्।

अहमिति पृ १०५ प ५ अवहसितमनोभवाकारं विहसितकामरूपम्। हरविषा कामिन। सहतामयं कोश-दासः। उपकार्य्या राजगृहम्। उपकार्य्योपकारिका इत्यमरः। पीवरभुजदण्डावुपरुद्धौ यत्र। त्वं किलाभिल-षितः। असम्भाव्यर्थे किलशब्दः। वार्त्तासम्भाव्ययोः किलः इत्यमरः। वहित्रं वहनम्। मद्गुः पोतविशेषः। अपि सिञ्चेत्। अपिशब्दः सम्भावनायाम्। गर्हा समुच्चयप्रश्नवा-र्त्तासम्भावनास्वपि इत्यमरः। अपिः पदार्थ—इति कर्म्मप्रव-चनीयसंज्ञयोपसर्गबाधान्न षत्वम्। द्राक्षा। मृद्वीका गोस्तनी द्राक्षा इत्यमरः। टङ्कृतं टङ्कारः। नपुंसके भावे क्तः। शार्ङ्गं चापे हरेश्चापि इति। लवलवीकृताङ्गान्। लवो भागस्तस्य लवस्तथाकृतान्। चूर्णितानित्यर्थः। अनभिसरमसहायम्। अनुप्लवः सहायश्चानुचरोऽभिसरः समाः इत्यमरः। सांयात्रिकः पोतवणिक्। एवमेवामरः। गाढपातितेति। गाढ़पातितं शिलावलयं लङ्गर पद-वाच्यं यत्र तथा। शैलेयं गन्धपाषाणः। शैलेयं गण्डपा-षाणः शिलापुष्पं च कथ्यते। अलक्षितेति। अलक्षितम-ध्यारूढ़ं चोणीधरस्य शिखरं येन सोऽतिदूरं गत इति यावत्। नालीकं पद्मम्। नालीकं पद्मबाणयो इति वैजयन्ती। कह्लारम्। सौगन्धिकं तु कह्लारम् इत्य-मरः। प्रियहिताय। प्रियं च हितं च तस्मै। कः कामः

सङ्कल्पः। सङ्कल्पो निश्चयः। इष्टसाधनमित्यर्थः। वर्षाणि द्वादश। कालाध्वनोरत्यन्तसंयोगे द्वितीया। दशशताक्ष इन्द्रः। शस्यं धान्यम्। ओषध्यः फलपाकनाशाः। ओषध्यः फलपाकान्ताः इत्यमरः। उत्सो निर्झरः। उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः इत्यमरः। पर्यहिण्डन्तः। हिडि गत्यनादरयोः। अजाविकटम् इति पाठः। घ्यन्तादजाद्यदन्तं विप्रतिषेधेन इत्यजशब्दस्य पूर्वनिपातः। सन्याते कटज् इति सामूहिकापवादः। कट् च: गवलगणम् गवलो महिषेऽस्त्री तु तस्य शृङ्गेऽपि वर्त्तते इति वैजयन्ती। गहनोद्देशे। गहनं काननं वनम् इत्यमरः। इङ्गुदी तापसतरुः। एवमेवामरः। बलात्कारम्। क्रियाया विशेषणमेतत्। उदञ्चनं सेचनपात्रम्। उत्सेचनं सेकपात्रं तदुदञ्चनमित्यपि इति।

पुनरिति। पृ ११ प १२ अष्टादशवर्षदेशीयः। किञ्चिन्न्यूनाष्टादशवर्षः ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। शालिस्तन्दुलविशेषः। कण्डनेन विना श्वेतं हैमन्तं शालि संस्मृतम् इति भावमिश्रः। शिविषु कावेरीदक्षिणतीरेषु। शिविर्मरुद्रथायास्तु दक्षिणं वर्षमिष्यते इति वैजयन्ती। सुजावन्तः शुद्धाः। मांसलौ पुष्टौ। अतएव मग्नगुल्फसन्धी। ग्रन्थिके घुटिके गुल्फौ इत्यमरः। अतएवाद्दृश्यमानशिराविशिष्टौ। सकृद्विभक्तः सम्विभक्तः। एकवारे समे सकृत् इत्यजयः। ककुन्दरः। कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे इत्यमरः। चूचुकं कुचाग्रम्। चूचुकं तु कुचाग्रं स्यात् इत्यमरः। स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः

पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्। मत्स्याङ्कुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ। जङ्घे च रोमरहिते विपुले सुवृत्ते जानुद्वयं सममतुल्यमसन्धिदेशम्। ऊरू घनौ करिकरप्रतिमावरोमावश्वत्थपत्रसदृशं विपुलं च गुह्यम्। विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रसनाकलापम्। नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्तगता च शस्ता। मध्यं स्त्रियाः स्त्रिवलनाथमरोमशं च वृत्तौ घनावविषमौ कठिनावुरस्थौ। रोमप्रवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचितार्थसुखानि धत्ते। बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृक्। कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः। दाक्षिण्ययुक्तमशठं परपुष्टहंसवल्गु प्रभाषणमदीनमसौष्टवं च। नासा समा समपुरा रुचिरप्रशस्ता दृङ्नीलनीरजदले द्युतिहारिणी च। नो सङ्गते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे। अर्धेन्दुसंस्थानमलोमशं च शस्तं ललाटं न तलं न तुङ्गम्। कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समं समाहितम्। स्निग्धनीलमृदुकुञ्चितकजौ मूर्धजाः शुभकराः शिरःस्थिताः इति वराहमिहिरः। शालिप्रस्थेन। प्रस्थोऽस्त्री सानुमानयोः इत्यमरः। शरावाभ्यां भवेत्प्रस्थः इति मागधपरिभाषायाम्। सपदि पादाधिकशेटकपरिमितेन शालिना। साकूतं साभिप्रायम्। आकूतं स्यादभिप्रायः इति हलायुधः। मात्रयेति स्वल्पेन कालेन। स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं

सूक्ष्मं कृशं तनु । स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणा-णवः इत्यमरः । तुषैरखण्डैः । पृथग्विनानाना—इति तृतीया । काकिणीभिः । वराटकानां दशकद्वयं स्यात्सा काकिणी इति भास्कराचार्यः । सिरतराणि सारवन्ति । मितम्पचाम् । मितनखे च इति खश् । शरावो वर्द्धमानकः । शरावो वर्द्धमानकम् इत्यमरः । नातिनम्नोत्तानविस्तीर्णः कुक्षिर्यस्येत्यर्थः । किंशारुम् । किंशारुः यस्य शूकं स्यात् इत्य-मरः । ककुभोलूखले । इन्द्रद्रुः ककुभोऽर्जुनः इत्यमरः । क्वथित-तपञ्चगुणम् । क्वथितं च तत्पञ्चगुणं चेत्यर्थः । मात्रया स्वल्प-कालेन । परावृत्य । पुनरवघटय्यत्यर्थः । समभ्युक्ष्यार्द्रीकृत्य । निरुष्णाङ्गारीकृत्येति । यदत्र वक्तव्यं तदुक्तं वासवदत्तादर्पणे । कुट्टिमे । कुट्टिमोऽस्त्री निबद्धा भूः । त्रिभागशेषेति । त्रिषु भागेषु यः शेषोऽग्रिमस्तत्र छिन्नस्येत्यर्थः । पलाशस्य पत्रस्य । अङ्गिराद्रूं दत्तशरावद्वयं सृशन्सृशन् । पेयामिति । पेयेति मण्डस्य नाम । सर्पिर्मात्रां घृतलेशम् । उपजहार समीपे परिवेषितवती । उपदंशः । उपदंशस्तु भक्षणम् । त्रिजातकं त्वक्तैलम् । कालशेयम् । दण्डाहतं कालशेयमरिष्टमपि गोरसः इत्यमरः । कलशिर्घटस्तत्र भवम् । इतिकुक्षिकल-शि—इति ढञ् । काञ्जिकम् । आरनालकसौवीरकुल्माषाभि-षुतानि तु । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिकम् इत्यमरः । अन्धस्योदने । भिस्सा स्त्री भक्तमन्धोऽन्नम् इत्य-मरः । हिमशिशिरेतोन्द्रियवर्गस्तमिरुक्ता माघेऽपि—कान्त-कान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ । स्वादुनि प्रणदितालिनिशीथे निर्ववार मधुनीन्द्रियवर्गः इति । साधु-

र्थप्रकर्षेणावर्तितं परावृत्तम्। त्रिवर्गम्। त्रिवर्गो धर्मकामार्थाः इत्यमरः।

तत इति पृ ११६ प १६ वृद्धपरिव्राजिकां वृद्धसन्न्यासिनीम्। अनुनीय दुःखापनोदनं कृत्वा। सैव वृद्धा वदति यथैवमिति। उदर्कं उत्तरं फलम्। उदर्कः फलमुत्तरम् इत्यमरः। तस्मात्प्रार्थनमित्यभिधाय। नाम शब्दग्रहेत्यर्थे। प्रतिवेशे समीपगृहे भवः प्रातिवेश्यः। वाणिज्यं वणिग्व्यापारः। वाणिज्यं तु वणिज्या स्यात् इत्यमरः। दासी चेटी। दण्डवाहिना दण्डधारिणा। अतर्ज्यत तर्जितः। अता दत्ता। अचोपसर्गात् इति तः।

तदिति। पृ १२० प १४ कुलपुत्रः शूद्रः। कुलपुत्रः कुलीने च शूद्रे इति। निर्व्यूढ इति। उत्पादितानेककलहः। परिवव्राज। सर्वं परित्यज्य वव्राजेत्यर्थः। लक्ष्म नखक्षतरूपं चिह्नम्। स भार्गवो ज्यौतिषिकः। भार्गवो शुक्रदैवज्ञौ। उपनिमन्त्रयामास भेदयामास। घटत ईहते। घट चेष्टायाम्। क्व घटते सङ्गच्छते। वृक्षवाटिका गृहोपवनम्। गृहोपवने वृक्षवाटिका इत्यमरः। निर्ग्रन्थिका श्रमणिका। न दृष्टो न लब्धः। स नूपुरः। दद्युरपि। अपिः सम्भावनायाम्। अगत्यन्तरां गत्यन्तरशून्याम्।

इदमिति। पृ १२४ प १८ अनपेक्षयापेक्षाया अभावेन। अपविद्धां त्यक्ताम्। पुलिनवति। पुलिनं तोयोत्थितो देशः। निष्कलो वृद्धः। उपरन्तुं मरणं कर्त्तुम्।

इति श्रीदशकुमारटीकायां भूषणाभिधायां षष्ठ उच्छ्वासः।

संस्थितो मृतः। परेतप्रेतसंस्थिताः इत्यमरः। सरस-माद्र्म्। नेत्रनिंसिनीं नेत्रस्पर्शिनीम्। णिसि चुम्बने। क्रियेत। कर्म्मणि सम्भावनायां लिङ्। यकि रिङ्शयक्—इति रिङादेशे सीयुटि सलोपे परलोपे रूपम्। आणक-नरेन्द्रेति। कुत्सितमन्त्रस्य। कुपूयकुत्सितावद्यखेटगर्ह्या-णकाः समाः इत्यमरः। तरलतरनराख्योत्यादि। तरलो हारस्ते च चञ्चले चोज्ज्वलेऽपि च इति केशवः। शल्कं शकलमस्त्रियाम्। कर्द्दन इति कलिङ्गराजस्य नाम। अस्रजर्जरेण। रोदनं चास्रमश्रु च इत्यमरः। रणरणिका-गृहीतेनोपलक्षिता नासादिजनतोदयदेशोऽभ्यन्तरे आघातो रणरणिका। नहनं बन्धनम्। आच्छिद्यापकृष्य। तस्य हस्तादसिलतां ताम् इति पाठः। सालो वृक्षः। अनो-कहः कुटः शालः इत्यमरः। स्कन्धः शाखाः। समे शाखा-लते स्कन्ध—इत्यमरः। निध्याय निर्वर्ण्य। निर्वर्णनं तु निध्यानम् इत्यमरः। कदर्थनात् क्लेशनात्। नगरम्। अकर्मकधातुयोगे इति कर्मता सरणिमार्गः। न चेदि-च्छसीदम् इति पाठः। इदं मदुक्तम्। प्रणीयसि कार-णेऽनणीयानादर इति नेच्छसीत्यर्थः। चिल्लिकालतां भ्रूलताम्। लीलालसं लीलामन्दम्। अलसं मन्दसौ-म्ययोः इत्यजयः। हृदयलक्ष्येति। हृदये लक्ष्यत उत्पद्य-तेऽसौ स मानः। स्यदायितेन। स्यदो जवे इति निपातः। जवायितेन। चन्द्रशालैकदेशे। चन्द्रशाला शिरोगृहम्। रणरणिका तरङ्गिणी वेगश्रेण्योभयम्।

अथेति। पृ १३१ प २० आयासितेति। आयासि-

तानि जायारहितानां चेतांसि यत्र। लीलायिततिलके शोभायितवृक्षविशेषे। तिलकः चुरकः श्रीमान् इत्यमरः। दक्षिणदहनसारथिर्मलयपवनः। कलिका कोरकः पुमान् इत्यमरः। कालाण्डजः। वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः। रक्तरक्ताधराः किन्नरस्त्रियः। शालीनोऽधृष्टः। शालीनकौपीने अधृष्टाकार्ययो इति निपातः। स्यादधृष्टस्तु शालीनः इत्यमरः। आसारो धारासम्पातः। शृङ्गारहेला। हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः इत्यमरः।

अत्रेति। पृ १३३ प ४ निकारोऽकारः। नरेन्द्रः पिशाचमन्त्रवान्। नरान्तरस्य। राज्ञ इत्यर्थः। आयस्यति यतते। यसु प्रयत्ने। अतिसंहितान्वञ्चितान्। शकलशास्त्रस्य। शकलेन चित्रवर्णस्येति। अकीर्त्यै इति वक्ष्यमाणप्रकारेण। स्थण्डिलशायी। स्थण्डिलाच्छयितरि व्रते इति णिनिः। सरहस्यानि सोपनिषत्कानि। सषड़ङ्गानि। निरुक्तं ज्योतिषं कल्पसूत्रं व्याकरणं तथा। छन्दोविचितिशिक्षेति वेदाङ्गानि वदन्ति षट्। धनदाज्ञाकरो यक्षः। अधिगतः प्राप्तः क्षणमेकान्तकालो येन। स्थाने योग्ये काले दर्शितो ज्ञानस्य तदधिष्ठितपिशाचादिज्ञानस्य सन्निधिः सान्निध्यं येन सः। निचाय्य दृष्ट्वा। निगीर्णदशदिशि। निगीर्णं खादितं ग्रस्तम्। निशाकरप्रभायाः स्वल्पत्वं कथितम्। जलतललीनेनान्तःप्रविष्टेनैव गम्यं क्षक्षमज्ञेयमन्तरालमवकाशो यस्य तथा सरस्तटं तदेकत एकत्र कृतम्। तत्तटे गुप्तं स्थानं जले कृतमिति यावत्। क्षतमन्तःकृतं च तत्। निर्णिक्तं शोधितम्। निर्णिक्तं शोधितं मृष्टम् इत्यमरः।

ह्लारयष्टिः प्रातस्तनप्रभारूपा। लास्यलीला नृत्यक्रिया। लीला विलासक्रिययोः इत्यमरः।

यात इति। पृ १३५ प १७ चर्चितं प्रलिप्तम्। चर्चा चर्चिक्यमालेपे इति वैजयन्ती। तटस्खलितेति। तटात्स्खलिताः पतिताश्च ते जले स्थगिताः स्थिता ये जलजसमूहस्य चञ्चलद्खण्डस्तस्य कटकाग्राणि तैर्दलितो देहो येषां तेषां राजहंसानां त्रासजर्जरं त्रासेन कठोरं रसितं शब्दस्तेन दत्तः कर्णौ येन तस्य। क्षणेन सुखेन। नात्यादरेण विलासेनैवेत्यर्थः। धिषणा बुद्धिः। बुद्धिर्मनीषा धिषणा इत्यमरः। रन्ध्रदर्शनासक्तैः रन्ध्रदर्शननिपुणैरित्यर्थः। जनान्ते जनपदमध्ये। जनो जनपदे प्रोक्तं इति हलायुधः। शस्तं प्रशस्तम्। धरणितैतिला भूदेवाः। तैतिलो देवकालिगौ। हास्तिनी हस्तिप्रमाणी। पुरुषहस्तिभ्यामण् च इति पक्षेऽणि संयोगादिश्च इती नोऽणिप्रकृतिभावः। हस्तिप्रमाणस्य या लीला तया। न तु ह्रस्वप्रमाणस्य लीलया। तथा सति प्रतीकारसम्भवापत्तेः। इन्द्रियाणामजेयस्य। जितेन्द्रियस्येत्यर्थः स्थगय नीरं जलम्। अजेयस्याविधेयस्य। वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः इत्यमरः।

तस्येति। पृ १४० प ५ नर्म परिहासः। द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च इत्यमरः।

इति श्रीदशकुमारटीकायां भूषणाभिधायां
सप्तम उच्छ्वासः।

अष्टवर्षदेशीयः ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। असमाप्ताष्टवर्षः। निष्कलो वृद्धः। निष्कलः स्थविरः समौ इत्यमरः। वंशनालो वेणुदण्डः। पञ्चषाः पञ्च षड्वा। संख्ययाव्यय-इत्यादिना बहुव्रीहिः। बहुव्रीहौ संख्येये डजबहुगणात् इति समासान्तो डच्। लिकुचः। लिकुचो लकुचो डहुः इत्यमरः। जरन्तं वृद्धम्। अतिसत्व इत्यादि। वदान्यो बहुप्रदः। विनेता नम्रताकारकः। उदग्र उन्नतः। उत्थानशीलः पौरुषस्वभावः। उत्थानं पौरुषम् इत्यमरः। शक्यभव्यकल्पारम्भी। शक्यश्च भव्यश्च कल्पश्चारम्भस्तच्छीलः। शक्यं तु सुकरं कर्म भव्यं तु जनलालितम्। कल्प युक्तं न भङ्गन सदैवेष समाचरेत् इति दिवाकरः। प्रभावयिता प्रभुत्वकारकः। अवितृष्णः। सर्वदापि गततृष्ण एवेति भावः। नदीष्णो निपुणः। नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि। नदीपूर्वात् स्नातेः कौशले इति मूर्धन्यादेशः। नेदिष्ठः। नेदिष्ठमन्तिकतमम इत्यमरः। प्रत्यवसितोपभोक्ता। षाड्गुण्यं षड्गुणाः। चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्। गुणाः सन्ध्यादयः। सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः इत्यमरः। चतुर्वर्णा एव चातुर्वर्ण्यम्। पुण्यश्लोकः पुण्ययशाः। पद्ये यशसि च श्लोकः इत्यमरः। अतिसत्व इत्यादिनयवाणे कामन्दकः—न्यायेनार्जनमर्थस्य वर्धनं रक्षणं तथा। सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्। नयविक्रमसंपन्नः सूत्थानश्चिन्तयेच्छ्रियम्। नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः। शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो

वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता। प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः इति याज्ञवल्क्योऽपि—ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनो रिपुः। स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता इति। प्राण्य जीवित्वा। अन् प्राणने। पुरुषायुषम्। अचतुर—इति सूत्रे निपातितम्। तदायतिस्तत्प्रभावः। स्यात्प्रभावेऽपि चायतिः इत्यमरः। आत्मसम्पत्पुरुषगुणाः। ते च समनन्तरमेव शास्त्रं प्रज्ञा इति श्लोकद्वयेन दर्शिताः। संस्कारो वासना। अर्थशास्त्रेष्वान्वीक्षिक्यादिषु। साध्यं विपक्षभूतम्। साधनं सहायभूतम्। योगक्षेमाराधनाय। अलब्धलाभो योगः। लब्धरक्षणं क्षेमः। तयोराराधनाय साधनाय। अप्राप्तप्रापणं योगः क्षेमः प्राप्तस्य रक्षणम्। इयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः इति। आराधनं साधने स्यादवाप्तौ तोषणेऽपि च इत्यमरः। स्थितिर्मर्य्यादा। सङ्किरेयुः सङ्कीर्णाः कुर्युः। आत्मानं स्वामिनमित्यादि। तथा च याज्ञवल्क्यः—अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित्किल्बिषं प्रजाः। तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान्। कामन्दकोऽपि—अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा। वर्णिनां लिङ्गिनां चैव सामान्यो धर्म्म उच्यते। स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम्। तस्याभावे च लोकोऽयं सङ्करान्नाशमाप्नुयात्। सर्वस्यास्य यथान्यायं भूपतिः सम्प्रवर्त्तकः। तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः इति। चाणक्योऽपि—राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। लोका-

स्तमनुवर्त्तन्ते यथा राजा तथा प्रजा इति। अभिषङ्गः सङ्गः। अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च इति वैजयन्ती। शाधि शिक्षय। शासु अनुशिष्टौ। शा हौ इति शादेशः। स्थाने युक्तम्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। प्रसादवित्तः प्रसादेन प्रसिद्धः। वित्तविज्ञातविश्रुताः इत्यमरः। भङ्गी वक्रोक्तिः। भङ्गी स्याद्वक्रभाषितम् इति वैजयन्ती। उत्कोच उपदा। कर्णधारो नाविकः। कर्णधारस्तु नाविकः इत्यमरः। कुमारसेवकः। कुमारावस्थायाः प्रभृति सेवकः। प्रेत्य जन्मान्तरे। प्रेत्यामुत्र भवान्तरे इत्यमरः। किल निश्चये। पाखण्डिनः सर्वतोपभ्रष्टाः सर्ववेषधराः। पट्जातीयश्चतुरसदृशः। प्रकारवचने जातीयर्। आहुः कथयन्ति। ब्रुवः पञ्चानाम् इति लटो झेरुसादेशे ब्रुव आहादेशः। काकिणीं विंशद्वराटकाः। वराटकानां दशकद्वयं यत्सा काकिणी इति भास्कराचार्य्यः। कार्षापणलक्षम्। कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः इति मनुः। वाङ्मयं वाग्जालम्। मानोन्मानम्। तुलावच्छेद उन्मानो मानः प्रस्थादिभिः कृतः इति वैजयन्ती। मुष्टिमर्द्धमुष्टिं चेति। उभौ परिमाणविशेषौ। शुक्तिभ्यां च पलं ज्ञेयं मुष्टिरष्टमिका तथा। जनपदायव्ययशोधको मुष्टिः। ग्रामस्य शोधकोऽर्द्धमुष्टिः। स्मृखत एव। आदरे षष्ठी। मध्यस्थायिनः। भाषया वकील पदवाच्याः। दूतचारवाक्यानि। अशक्यतां चेत्यर्थः। स्वपरेति। स्वस्य परस्य शत्रोश्च मित्रमण्डलान्यप्युपजीवन्त्याश्रयन्ते तेभ्योऽपि गृह्णन्ति स द्युतामाक्षेपः। तिस्र

इत्यादि। त्रिंशद्घटिकात्मकदिवसस्याष्टमो भागः। शस्त्राग्निप्रणिधयः शस्त्राग्निभ्यां हन्तारो गुप्तदूताः। श्रोत्रिय इवेति। श्रोत्रिय इव। उपनमेत समीपमागच्छेत्। वीताशुल्कस्य मासूल पदवाच्यस्य बाधा यत्र तत्तया। राजकीयमित्युक्त्वा बाधामपहरन्ति। शास्त्रज्ञसमाज्ञातो नीतिशास्त्रज्ञत्वेन कीर्त्तितः यशः कीर्त्तिः समज्ञा च इत्यमरः। तैरपीति। अर्जनेऽन्वयः। तैरपि प्रारब्ध इति तृतीयायाः प्रारम्भेऽन्वयः। अतिसन्निधीयमाना इति। मिलिता अनुयायिन इति यावत्। तन्त्रावापो नीतिविचारः। पण्डिताः पुनश्च नीतिशास्त्रज्ञाः। पञ्चाङ्गीसृष्टेति। पञ्चभिरङ्गैर्सृष्टा स्पृष्टेत्यर्थः। जननाथस्यातिष्ठत। उत्तिष्ठतेति। यूयमिति शेषः। मनसा वा मनसा खित्यर्थः। तथापि का गतिः। उपायो नास्तीति भावः। पितृपितामहानुयातैः इत्येव पाठः। सुलभमलीकं दुःखं येष्वित्यर्थः। आस्पदं प्रतिष्ठाप्रयोजकं स्थानममात्यत्वादि रूपम्। आटविकानां पशूनां विश्वासः। आशयौदार्य्यमाशयः। चित्तम्। अध्यवसायः। निश्चयो मानावधारणमभिमाननिश्चयो निश्चिताभिमानः। अकृपणां दैन्यशून्याम्। अपराधप्रमार्जनादिति। परकृतापराधविस्मरणात्। सातत्येनानुभव इति। तदेकतानता विशदीकरणमेतत्। पानसमय आगतेभ्यो दीयन्त आसवाः इति सम्प्रदायवशादत्र विभागशीलता। सस्वर्गणमेकीकरणम्। पानैः गुणान्तरमाह—वाचः पारुष्यमिति। कर्मफलानि। तत्तत्कर्मणि लब्धानि राजधनानि। सुभुग्रभङ्गीति। वक्ररचना वक्रोक्तिः। स्वैरिणीभिः क्रियमाणवक्रोक्तिः।

अपहृता गता: परिहृतय: परिहारा येषां ते। ख्यातयथा-र्विगीतमार्गा:। प्रहृता: प्रवातविषया:। अभूवन्निति शेष:। विष्वक्पृथक्प्रचारेण विच्छिन्ना अनुयातारो येषां-तस्वैनैकीकृतानामेकाकीकृतानाम्। भर्तृभयमपहृत्य दूरी-कृत्य। तत्साहसं जारसाहसम्। प्रमापणैर्मारणै:। अम-र्षणै: प्रेरणै:। तत्परामृष्टं वानवास्यपरामृष्टं राष्ट्र-प्रान्तभागो यस्य स:। व्यतिषक्तं कार्यान्ते व्यापृतम। नैर्घृ-ण्यादकरुणत्वात्। जीवेयं चेदिति। यदि मज्जीवनं भवे-त्तदेत्यर्थ:। किमीय:। कस्यायं किमीय:। जात्या कीदृग-जाते: सम्बन्धी। किं न जानामि। अपि तु जानाम्येव। अभिलषति। संमील्य मेलनं कृत्वा। वैजन्यम्। जनस-मूहो जनता। विगता जनता यस्मात्तस्य भावम्। युष्मासु त्वयि मद्द्विषां च।

अथेति। पृ १६० प १७ तं जरन्तम। य: कूपे पतित: स्थित:। आसन्नवर्तिनां समीपस्थानां पुरुषाणाम्। समा-कृष्य ता विक्रोशा: कृत्वा। उपहितवर्मा छिन्नशरीर:। उत्क्रोशपात: पक्षिविशेष:। उत्क्रोशकुररौ समौ इत्यमर:। अरूकर्तुं छेत्तुम्। विचेतीकुर्वन्। अरुर्मनश्चक्षु:—इति-सलोप:। नालीजङ्घम्। अन्विति शेष:। सैकतास्पृष्टपादस्य न्यासो यस्यां तथा। एतेन चिह्नदर्शनं नास्तीति सूचितम्। दुर्गागृहे देवालये। भग्नपार्श्वं तिर्यक्पार्श्वम्।

अथेति पृ १६२ प १७ प्रकृतीर्लोकान्।

इति श्रीत्रिलोकचन्द्रात्मजलक्ष्मणरामसूनुशिवरामकृतौ दशकुमारभूषणेऽष्टम उच्छ्वास:।

# दशकुमारचरितपूर्वपीठिकाटीका पददीपिकाख्या।

ब्रह्माण्डेति। ब्रह्माण्डमेव छत्रं तस्य दण्डः। ब्रह्माण्डं भुवनम्। शतधृतिर्ब्रह्मा। शंभुः शतधृतिः स्रष्टा इति हैमः। तस्य भवनमुत्पत्तिस्थानं वासस्थानं वा तद्भूतस्याम्भोरुहोऽम्भसि रोहतीति व्युत्पत्त्या कमलस्य। ह्रान्तोऽयं शब्दः। चोणी पृथ्वी तद्रूपा या नौस्तरिस्तस्याः कूपदण्डो गुणवृचकः। डोलकाठी इति भाषायाम्। चोणिर्ज्या काश्यपी चितिः। स्त्रियां नौस्तरणिस्तरिः। कूपको गुणवृचकः इति च सर्व्वनामरः। चरन्ती प्रस्रवन्ती यामरसरिद्वियद्गङ्गा सैव पट्टिका तस्याः केतुदण्डः। ज्योतिश्चक्रं ज्योतिः समूहस्तस्याचदण्डो नाभिक्षेपं काष्ठम्। आंस इति भाषा। त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य विजयस्तद्दर्शकः स्तम्भदण्डः। अङ्घ्रिचरणो दण्ड इवेत्युपमितसमासः। श्रेयो निःश्रेयसं सुकृतं पुण्यं वा श्रेयोनिःश्रेयसामृतम्। स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः इत्युभयत्राप्यमरः। अतिशयेन प्रशस्यम्। ईयसुनि प्रशस्ये इति श्रादेशः। त्रैविक्रमस्त्रिविक्रमस्यायम्। अङ्घ्रिदण्ड इत्यस्य विशेषणम्। वितरतु ददातु। विबुधद्वेषिणां दनुजानाम्। कालदण्डः कृतान्तः। मृत्युरिति यावत्। कृतान्तानेहसोः कालः इत्यमरः। कालो मृत्यौ महाकाले समये यमकृष्णयोः इतिमेदिनी च।

अस्तीति [ पृ १ प ११ ] । निकषवदाचरति निकषायते । निकषायतेऽसौ निकषायमाणा । शाणस्तु निकषः कषः इत्यमरः । पण्यानि विक्रेयवस्तूनि । विक्रेयं पणितव्यं च पण्यम् इत्यमरः । रत्नाकर उदधिः । शेखरीभूता भूषणभूता । वीरेति । वीराश्च ते भटाश्च तेषां पटलं तेनोद्गततरङ्गः । तुरङ्गाश्च कुञ्जराश्च त एव मकरास्तैर्भर्षि वा एताद्दृशः । सकलाश्च ते रिपवश्च तेषां गणस्तस्य कटकं स एव जलनिधिस्तस्य मथने मन्दर इवाचरन् समुद्दण्डो भुजदण्डो यस्य सः । भटा योद्धारः । पटलं समूहः । उत्तरङ्ग उन्नतवीचिः । कटकं सेना । पुरन्दर इन्द्रः । अङ्गणं चत्वरं तत्सम्बन्धि वनम् । गणिका वेश्या । वारस्त्री गणिका वेश्या इत्यमरः । अतिमानयातिप्रमाणया । विस्तृतयेति यावत् । कुन्दं पुष्पविशेषः । माघ्यं कुन्दम् इति । घनसारः कर्पूरः । कर्पूरो हिमवालुका । घनसारः इति हैमः । नीहारो हिमम् । मृणालं बिसम् । मरालो हंसः । सुरगज ऐरावतः । गिरिशस्य शिवस्याट्टहासो महान् हासः । किञ्चिच्छ्रुते विहसितमट्टहासो महीयसि इति हैमः । काशस्तृणभेदः । शरदिन्द्विति । शरदिन्दुश्च कुन्दं चेत्यादिः काशान्तो द्वन्द्वः । तैर्नीकाशा निभा । सदृशेति यावन्मूर्तिर्यस्याः । निभसङ्काशनीकाशप्रतीकाशोपमादयः इत्यमरः । दिशामन्तरालं दिगन्तरालं तस्य पूर्तिः । रचिता कृता दिगन्तरालपूर्तिर्यया । सुरभितो मनोज्ञः । स्वर्लोकेति । स्वर्लोकः सुरालयो मेरुस्तस्य शिखरं तदुत्तत्सम्बन्धीनि वा उद्धाणि स्थूलानि रुचिराणि सुन्दराणि च यानि रत्नानि

तेषां तद्युक्तो वा यो रत्नाकरस्तस्य वेला जलवृद्धेर्मर्यादा तया मेखलायिता या धरणी सैव रमणी। मेखला काञ्ची। स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा इत्यमरः। अनवरता नित्याः। यागा यज्ञाः। विद्यायाः सम्भारस्तेन भासुरा देदीप्यमानाः। भूसुरा ब्राह्मणाः। भुवि सुराः भूसुराः। तेषां निकरो वृन्दम्। विरचितोऽरातिसन्तापो येन। रिपुदत्तसन्ताप इत्यर्थः। अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः इत्यमरः। वियत आकाशस्य मध्ये हंसः सूर्यः। दर्पोऽवलेपः। कन्दर्पो मन्मथः। सोदर्यो बन्धुः समानोदर्यः। अत्र तु सोदर्य सदृशम्। हृद्यं मनोहरम्। निरवद्यं निर्दोषम्। लीलावत्यो योषितस्तासां कुलं तस्य शेखरमणिर्भूषणमवतंसः। रोषणेति। क्रोधताम्रदृशेत्यर्थः। निटिलेचक्षः शिवः। निटिले भालस्थले ईक्षणं नयनं यस्येति विग्रहः। मकरकेतनो मन्मथः। अनवद्या निर्दोषा। रोलम्बेति। रोलम्बावली भ्रमरपङ्क्तिः। अर्थान्मौर्वीस्थिता। इन्दिन्दिरोऽली रोलम्बो द्विरेफः इति हैमः। प्रेम्ण आकरः खनिः। खनिः स्त्रियामाकरः स्यात् इत्यमरः। विजितारविन्दं विजितं कान्त्या तिरस्कृतमरविन्दं कमलं येन तत्। जयध्वज इव आचरति जयध्वजायते। जयध्वजे तिष्ठति वा। जायायुतः पत्नीसहितः। अक्षियुगलं अक्ष्णोर्द्वयम्। अङ्गवीरः प्रधानयोधः। मलयसमीरो दक्षिणानिलः। पथिकाः प्रोषिताः पान्थाः। पान्थः पथिक इत्यपि इत्यमरः। तेषां हृदयस्य यद्दलनं पाटनं तस्मिन् करवालः कृपाणः। कौक्षेयको मण्ड-

लाग्र: करवाल: कृपाणवत् इत्यमर:। प्रवाल: किसलय:। बन्धुरोन्नतानता। बन्धुरं तून्नतानतम् इत्यमर:। कन्धरा ग्रीवा। न्यायमाने ज्येवाचरन्त्यौ। मार्दवे मृदुत्वेऽसमाने। कह्लारं कमलं तस्य कोरक: कुड्मल:। गङ्गेति। आवर्तोऽम्भसां भ्रम:। स्यादावर्तोऽम्भसां भ्रम: इत्यमर:। तत्सनाभि: सदृशा। दूरीकृतेति। दूरीकृता अपनीता योगिजनानां मनोरथा येनेति। जैत्रो जयनशील:। जयस्तम्भेति। आरम्भा: कर्माणि। आरभ्यन्त इत्यारम्भा:। रम्भे कदली। ऊर्वोर्युगमूरुयुगम्। आतपत्रेति। आतपावायते तदातपत्रं छत्रं तद्रूपं यत्सहस्रपत्रं कमलं तत्। प्रसूनानि पुष्पाणि। प्रसूनं कुसुमं सुमम् इत्यमर:। समभूवन्। भूसत्तायाम् इति धातोर्लुङि रूपम्। विजितेति। विजितं स्वविभवेन तिरस्कृतममरपुरमिन्द्रनगरी येन तस्मिन्। अन्वभावि। अन्वित्युपसर्गपूर्वकभूसत्तायामिति धातो: कर्माणि लुङ्।

तस्येति [पृ३प८]। विधेया विनयग्राहिण:। विधेयो विनयग्राही इत्यमर:। धिषणा बुद्धि:। बुद्धिर्मनीषा धिषणा इत्यमर:। विबुधाचार्य: सुरगुरुर्गुरुस्तेनापि विचारणीयं यत्कार्यं तस्मिन्नपि साहाय्यकारिण:। अतीव पटुबुद्धय इति भाव:। कुलामात्या वंशक्रमागता:। धर्मशीलो धार्मिक:। असारतां फल्गुतामध्रुवत्वमित्यर्थ:। अन्यो देशो देशान्तरम्। अगमदिति। गमॢ गतौ इत्यस्य लुङि रूपम्। विटा: षिङ्गा:। विटोऽद्रौ लवणे षिङ्गे मूषिके खदिरेऽपि च इति मेदिनी। नटा: शैलूषा:। भरता इत्यपि नटा:

इत्यमरः। वारनार्यो गणिकाः। परायणस्तत्परः। दुर्विनीतोऽविनीतः। जनकश्चाग्रजन्मा च जनकाग्रजन्मानौ तयोः। पितुर्ज्येष्ठभ्रातुश्चेत्यर्थः। शासनं निदेशम्। बभ्रामेति भ्रमु अनवस्थाने इत्यस्य लिटि रूपम्। वाणिज्यं वणिक्कर्म। भाण्डस्य द्वीपान्तरे नयनं द्वीपान्तरादानयनमित्यादि च। पारावारः समुद्रः। पारावारः सरित्पतिः इत्यमरः। पुरन्दर इन्द्रस्तस्य पुरं नगरं तदतिथयो गृहागताः। दूराच्चोपनतं श्रान्तं वैश्वदेव उपस्थितम। अतिथिं तं विजानीयात् इति व्यासः। प्रेत्य महेन्द्रनगरं गतेषु। मृतेष्विति तात्पर्य्यार्थः। पूर्वमनतिक्रम्य वर्तत इति यथापूर्वम्। अनुपूर्वः ष्ठाधातुः करणार्थे वर्तते। ष्ठा गतिनिवृत्तौ इत्यस्य लङि रूपम्। अकुर्वन्नित्यर्थः।

तत इति [पृ१ प२०]। नानाविधान्यनेकप्रकाराणि। महान्त्यायुधानि तेषु निपुणता तया रचितानि कृतानि यान्यसंख्यानि जन्यानि युद्धानि तेषु राजन्यानां क्षत्रियाणां मौलीनां किरीटानां पालिप्रान्तेषु प्रदेशेषु निहिता अध्यारोपिताः स्थापिता वा निशितास्तीक्ष्णाः सायका बाणा येनैतादृशः। युद्धमायोधनं जन्यम् इति। मूर्धाभिषिक्तो राजन्यः इति चामरः। मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् इति मेदिनी। पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः इत्यजयः। निशितक्ष्णुतशातानि तेजिते इत्यमरः। प्रत्यग्रो नवीनः। संग्रामो युद्धम्। घस्मरो भक्षकः शत्रुनाशक इत्यर्थः। स्वरस्यदः क्षरच् इति क्मरच्। समस्तकटोऽतिरिक्तो मान एव सार यस्य तम्। मानसार इति

